subject of discussion in the thirteenth chapter. The fourteenth chapter takes 'exposition of *jīvanmukti*' for discussion. True nature of *śravaṇa*, *manana* and *nididhyāsana* - the three instruments of devotion is discussed in the fifteenth chapter. A full discussion on *bhakti* or devotion is done in the sixteenth chapter. The seventeenth chapter gives a detailed exposition on the attainment of self-knowledge. The concluding chapter is entirely devoted to verses in praise of the Maharshi.

*Saddarśanam* is the Sanskrit rendering of Bhagavan Ramana Maharshi's original Tamil writing '*Ulladu Napardu*'. This rendering is done by the Muni. Brahmashri Kapali Sastri has written a commentary on this. This commentary is as important as the original verses. Realisation of Truth is the subject matter of this text.

There are three different parts of *viśvamīmāṁsā* given in this volume. Out of these three only the first part is complete and second and third are incomplete. In all these verse the Muni discusses about the principles of *īśvara*, *śakti*, all gods and goddesses, the individual soul, the descent of the Divine, the means of worship as propounded in the Upanishads. The text also deals with the concepts of heaven, hell, various link-worlds, and the final liberation. The self-evident nature of the Veda and various other principles related to the existence are discussed in these verses of *viśvamīmāṁsā*.

*Dharmānuśāsanam* has only two chapters in this text. In the first chapter, the Munni discusses about good and bad deeds, virtues and vices, that which lead towards *dharma* and that which lead towards *adharma*. The second chapter deals with the creation of the four *varṇas* - *brāhmaṇa*, *kṣatriya*, *vaiśya* and *śūdra*.

# सदाचारबोधिनी

## प्रथमोऽध्यायः

देवं वृषं नमस्कृत्य जगदीशस्य वाहनम् ।
सारं सङ्गृह्य शास्त्रेभ्यः सदाचारं प्रचक्ष्महे ॥ १॥

गीतो बहुविभूतिर्यो मन्त्रकृद्भिर्महर्षिभिः ।
ईश्वरः सर्वभूतानां भक्तिस्तत्र वृषः परः ॥ २॥

तद्रूपशक्तिकल्याणगुणलीलाकथास्मृतिः ।
अच्छिन्ना तैलधारावत् प्रीत्यात्मा भक्तिरुच्यते ॥ ३॥

दीनाः शरणमिच्छन्तो ये वर्तन्ते शरीरिणः ।
विदधीत दयां तेषु तत्पुण्यं परमं विदुः ॥ ४॥

योषायां विधिनोढायां भजन्त्यां भिक्षुकेतरः ।
अनुरक्तो भवेत्प्राज्ञस्तत्पुण्यं परमां विदुः ॥ ५॥

सर्वेष्वन्येषु भूतेषु स्त्रीषु वा पुरुषेषु वा ।
स्निग्धचित्तो भवेन्मर्त्यस्तं धर्मं परमं विदुः ॥ ६॥

असङ्गश्च ससङ्गश्च स्नेहस्तु द्विविधो मतः ।
असङ्गस्य जनाः पात्रमसन्तोऽन्यस्य सज्जनाः ॥ ७॥

नाभिध्यायेत् क्वचिद् द्रोहं परेषां पण्डितो जनः ।
अभिध्यां सम्प्रभाषन्ते पण्डिताः पातकं महत् ॥ ८॥

परेषां द्रविणेष्विच्छां नैव कुर्यादधर्मतः ।
परद्रव्याण्यधर्मेण वाञ्छन्नशुभमाप्नुयात् ॥ ९॥

परेषां तेजसा लक्ष्म्या विद्ययोत प्रभावतः ।
असूयाकुलितो न स्यात्सा हि देहविशोषिणी ॥ १०॥

वृथा गुरून्न शङ्केत मित्राणि तनयान् वधूम् ।
प्रेष्यान्वा बुद्धिमान् मर्त्यो विना किञ्चिन्निदर्शनम् ॥ ११॥

परेषां कुलनारीषु नाभिलाषः प्रशस्यते ।
कुलद्वयस्य कल्याणं प्रतिषेद्धुं हि सक्षमः ॥ १२॥

न किञ्चिदवमन्येत मनसा देहधारिणम् ।
देहे सर्वस्य जीवाख्यो लोकनाथो ह्यवस्थितः ॥ १३॥

यः क्रोधस्य स्थितिं दद्यान्मनसि क्षणमप्यधीः ।
स दग्धसर्वसुगुणः पुरुषो भवति ध्रुवम् ॥ १४॥

धरण्याः सागरान्ताया भर्ता सन्नपि मानवः ।
न गर्वं मनसा गच्छेत् गर्वितो हि प्रणश्यति ॥ १५॥

परेषां जातु चिद्दोषांश्चिन्तयेन्न विचक्षणः ।
आत्मानं योजयेद्दोषैः परदोषानुचिन्तनम् ॥ १६॥

मोहान्नापरमज्ञानं स हेतुः संसृतेः परः ।
अनात्मन्यात्मबुद्धिर्या तां मोहं कवयो विदुः ॥ १७॥

न मुधा विषयान् ध्यायेत् तत्सङ्गस्य हि कारणम् ।
चित्ते सङ्गेन संस्पृष्टे किं पापं नाचरेज्जनः ॥ १८॥

वेदनाम्नि ब्रह्मकोशे नाविश्वासो न गर्हितः ।
प्रत्यक्षादनुमानाच्च प्रामाण्यं तत्र वर्तते ॥ १९॥

द्वादशेमान् महादोषान् महात्मा यो विवर्जयेत् ।
पातकानां दुराधर्षः स विशुद्धतमो भवेत् ॥ २०॥

**द्वितीयोऽध्यायः**

नित्यं स्नानं नरः कुर्यान्निशापाये प्रयत्नतः ।
तद्धि कान्तिप्रदं वृष्यं कण्डूदाहनिवारणम् ॥ २१॥

स्त्रियं परस्य नालिङ्गेत् कामतः सा हि दारुणा ।
आश्लेषाद्भस्मसात्कुर्याद्यशः पुण्यं च देहिनाम् ॥ २२॥

सर्वं स्वभावतः पश्येदृजुना चक्षुषा जनः ।
सर्वः करोति विश्वासमृजुदर्शिनि मानवे ॥ २३॥

न लोकेतान्यमन्यां वा सविकारमुदारधीः ।
अर्हपात्रगतप्रीतेः शुद्धाया उदयादृते ॥ २४॥

पुण्यश्लोकचरित्राणि स्तोत्राणि च सुपर्वणाम् ।
तत्त्वानि च पदार्थानां सक्त आकर्णयेत्सुधीः ॥ २५॥

नाकर्णयेत्सतां निन्दां गुरूणामीश्वरस्य वा ।
वेदानां तापसानां वा विद्वानपसरेत्ततः ॥ २६॥

हृद्यं च मेध्यमायुष्यं देवताभ्यो निवेदितम् ।
संविभक्तं तदर्हेभ्यो मितमद्याच्छरीरभृत् ॥ २७॥

वस्तूनि लशुनादीनि वर्ज्यान्याहुर्मनीषिणः ।
प्रतिहन्तुमलं तानि प्रतिभानं शरीरिणाम् ॥ २८॥

नाद्यादुच्छिष्टमन्यस्य मातरं पितरं विना ।
विना गुरुं विना सिद्धान् विना प्राणप्रियं जनम् ॥ २९॥

नाद्यान्नरः पर्युषितं विनिष्क्रान्तो रसो यतः ।
नीरसानां पदार्थानामशनं कृन्तनं धियः ॥ ३०॥

वर्जनीया सुरा सद्भिः तां दोषाणां विदुर्निधिम् ।
यच्चाप्यन्यन्मदकरं तच्च सर्वं विवर्जयेत् ॥ ३१॥

दोषा बह्वशने प्रोक्ता बहवो धर्मवेदिभिः ।
तस्माद् बह्वशनं वर्ज्यं सता श्रेयोभिलाषिणा ॥ ३२॥

मांसं योऽन्यस्य मांसेन क्रूरः स्वं परिरक्षति ।
तस्य धर्मश्च बुद्धिश्च दूरतो द्वितयं भवेत् ॥ ३३॥

सुगन्धीनि निषेवेत वस्तूनि सततं कृती ।
सुगन्धिषु पदार्थेषु कमला हि प्रतिष्ठिता ॥ ३४॥

दुर्गन्धीनि न सेवेत कृतवस्तूनि जातुचित् ।
प्रतिहन्तुमलं तानि प्रतिभानं शरीरिणाम् ॥ ३५॥

## तृतीयोऽध्यायः

सत्यं स्वर्गस्य सोपानं सत्यं पुण्यं परं मतम् ।
सत्ये रमन्ते धीमन्तः तस्मात् सत्यं वचो वदेत् ॥ ३६॥

प्रियं हृद्यं समस्तस्य प्रियं श्रवणयोः सुखम् ।
प्रिये रमन्ते सर्वेऽपि तस्माद्वाक्यं प्रियं वदेत् ॥ ३७॥

हितं निवर्तयेन्मर्त्यं दत्तकर्णममार्गतः ।
अग्रतो दत्तकर्णस्य तस्माद्वाक्यं हितं वदेत् ॥ ३८॥

येनासत्येन सत्यस्य भवति त्राणमङ्गिनः ।
तदसत्यं वचो दुष्टं नेति दूरदृशो विदुः ॥ ३९॥

येन सत्येन सत्यस्य भविता हानिरङ्गिनः ।
न वदेत् पण्डितो मर्त्यस्तत्सत्यमनृतं यथा ॥ ४०॥

स्तोत्राणि यानि प्रोक्तानि मुनिभिस्तत्त्वदर्शिभिः ।
यथावकाशं गेयानि तानि श्रेयोभिलाषिणा ॥ ४१॥

पुण्यश्लोकचरित्राणि गीतानि कविसत्तमैः ।
यथावकाशं गेयानि तेषूत्साहः प्रतिष्ठितः ॥ ४२ ॥

सत्यो नार्यः सुराः सर्वे महात्मानश्च तापसाः ।
रक्षितारश्च राजानः पुण्यश्लोका उदाहृताः ॥ ४३ ॥

गायेन्नामानि देवस्य सर्वभूतमहेशितुः ।
गीतो बहुविभूतिर्यो मन्त्रकृद्भिर्महर्षिभिः ॥ ४४ ॥

असत्यं सर्वपुण्यघ्नं असत्यं पातकं परम् ।
तस्मादसत्यं नो वाच्यं नरैः कल्याणकाङ्क्षिभिः ॥ ४५ ॥

अप्रियं सर्वमैत्रीघ्नं अप्रियं दारुणं परम् ।
न वाच्यमप्रियं तस्मान्नरैः स्नेहाभिलाषिभिः ॥ ४६ ॥

अहितं सर्वदुःखानि विधातुं शृण्वतामलम् ।
न वाच्यमहितं तस्मात् परश्रेयोऽभिलाषिभिः ॥ ४७ ॥



असम्बद्धानि वाक्यानि न वदेत् पण्डितो जनः ।
असम्बद्धेषु वाक्येषु सर्वे दोषाः प्रतिष्ठिताः ॥ ४८ ॥

नाश्लीलं कीर्तयेद् विद्वान् परेषामग्रतः क्वचित् ।
महतीमपि मर्यादामश्लीलं हन्ति भाषितुः ॥ ४९ ॥

न विदध्यात् सतां निन्दां गुरुणामीश्वरस्य वा ।
वेदानां तापसानां वा श्रेयस्कामः शरीरभृत् ॥ ५० ॥

आदिशेन्नैव कृत्येषु मातरं पितरं गुरुम् ।
यतिनं तापसं वृद्धं ज्येष्ठं वा भ्रातरं नरः ॥ ५१॥

नासाधूनां चरित्राणि पठेत् सङ्गेन पण्डितः ।
साधूनामिव गीतानि कविभिर्लोभदूषितैः ॥ ५२॥

गायेन्नासन्ति गीतानि कामदूषितचेतसाम् ।
वेश्यानामसतीनां वा रागो यत्राभिवर्ण्यते ॥ ५३॥

काले काले नरः कुर्यादादित्यस्य नमस्कृतिम् ।
तदन्तरे हि विश्वस्य प्रभुः परमपूरुषः ॥ ५४॥

हुताशनं नमस्कुर्याद्वेदिमध्यगतं जनः ।
परस्य ज्योतिषस्तस्य प्रतीकं हि वदन्ति तम् ॥ ५५॥

नमस्कुर्यादुभे सन्ध्ये शक्तिभूते प्रजापतेः ।
अज्ञानेन कृतं पापं तद्धन्तीत्यागमा जगुः ॥ ५६॥

पिता द्यौर्जननी भूमिराचार्यस्तु बृहस्पतिः ।
पूजनीयाः प्रयत्नेन वन्दनीयाश्च ते त्रयः ॥ ५७॥

होतव्यमग्नौ सन्ध्यासु समुद्दिश्येष्टदेवताम् ।
सा पूजा परमा प्रोक्ता स यज्ञस्तन्महद्व्रतम् ॥ ५८॥

दद्यादेव यथाशक्ति याचमानाय मानवः ।
आख्याता धीमतां श्रेष्ठैर्दाने हि बहवो गुणाः ॥ ५९॥

न हन्यात् प्राणिनं कञ्चित् गोमनुष्यौ विशेषतः ।
मनुष्येष्वप्यहिंस्रस्य हत्या घोरा प्रकीर्तिता ॥ ६० ॥

परस्त्रियं न गृह्णीयात् साग्निज्वाला हि दारुणा ।
ग्रहणात् भस्मसात् कुर्याद्यशः पुण्यं च देहिनाम् ॥ ६१ ॥

परस्य न हरेद्वित्तं दरिद्रस्य विशेषतः ।
दरिद्रस्य हृतं वित्तं सर्वनाशाय कल्पते ॥ ६२ ॥

गच्छेत् तीर्थानि पुण्यानि पुण्यान्यायतनानि च ।
पदा न ताडयेदन्यं तत्परं ह्यवमाननम् ॥ ६३ ॥

विसर्गं शकृतः कुर्यात् यो मार्गेष्वलसो जनः ।
स सर्वैर्घृणया युक्तैर्महांश्च परिभूयते ॥ ६४ ॥

विसर्गं शकृतः कुर्यान्मनुष्योऽनावृते स्थले ।
प्रायो यत्र न सञ्चारो जनानामुपलभ्यते ॥ ६५ ॥

आत्मनः सहधर्मिण्यां रतिं कुर्यादृतावृतौ ।
तत्र धर्मश्च कामश्च सन्ततिश्च प्रतिष्ठिता ॥ ६६ ॥

कृष्णपक्षे चतुर्दश्यां अष्टम्यां च कुहूदिने ।
सङ्क्रान्त्यां पौर्णमास्यां च शस्तं रतिविवर्जनम् ॥ ६७ ॥

व्रती दिनानि मनुजो यावन्ति व्रतमाचरेत् ।
तावन्ति नैव भार्यायां सम्प्रसज्येत कर्हिचित् ॥ ६८ ॥

विवर्जयेद्वधूयोगं नरः श्राद्धदिनेष्वपि ।
पितरः प्रशपन्त्येतं यं शुक्रं येषु मुञ्चति ॥ ६९॥

प्राज्ञो रजस्वलां भार्यां नैव गच्छेद्दिनत्रये ।
अमङ्गल्यां तदा प्राहुर्नारीं शास्त्रविदो जनाः ॥ ७०॥

गृहिणीं न बलाद्गच्छेदनिच्छां रोगकर्षिताम् ।
गर्भभारावभुग्नां वा जरतीं वा गतार्तवाम् ॥ ७१॥

न परस्य स्त्रियं गच्छेत्साग्निज्वाला हि दारुणा ।
गमनाद्भस्मसात्कुर्याद्यशः पुण्यं च देहिनाम् ॥ ७२॥

मातरं गुरुभार्यां वा गच्छन् पतति मानवः ।
भेदो न विद्यते कश्चिच्चतुरङ्घ्रेश्च तस्य च ॥ ७३॥

राजभार्या मित्रभार्या भार्या सच्छ्रोत्रियस्य च ।
पुत्री च भगिनी श्वश्रूः अगम्या गुरुदारवत् ॥ ७४॥

कन्यां न दूषयेद्योषां श्रेयस्कामो जनः क्वचित् ।
कुप्यन्ति देवतास्तस्मै कन्या येन प्रदूषिता ॥ ७५॥

न गच्छेद्विधवां नारीं रक्षन्मङ्गलमात्मनः ।
तस्यां प्रजा हि सञ्जाता विनिहन्ति कुलद्वयम् ॥ ७६॥

भार्या पुनर्भूः दिधिषोः स्वीयैव न पराङ्गना ।
यद्यग्रे दिधिषुस्तस्याः तस्य सा तु पराङ्गना ॥ ७७॥

क्रीतां धनेन यो वेश्यां गच्छेदल्पमतिर्जनः ।
न स केवलमर्थेन वर्चसा च वियुज्यते ॥ ७८॥

न निषिद्धं न विहितं यत् कर्म तु तदाचरन् ।
नैव पापी भवेन्मर्त्यो न भवेदपि पुण्यवान् ॥ ७९॥

अनिर्देशे विशेषस्य पुरुषस्तूपलक्षकः ।
स्त्रीयोगात्पुंसि यत्पापं तत्पुंयोगान्न वा स्त्रियाः ॥ ८०॥

एतदाचारसामान्यं तप आचरतोदितम् ।
नरसिंहस्य पुत्रेण नरश्रेयोऽभिलाषिणा ॥ ८१॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः
गणपतेः कृतिः सदाचारबोधिनी समाप्ता ॥



33. कर्णाटराजध्वजशासनानां
कर्णाटराजार्चितया कुलं वः ॥
चामुण्डया लोकितयोदरस्थ
ब्रह्माण्डया यात्वभिलाषसिद्धिम् ॥

34. संहृत्य मूकं जितदेवलोकं
कर्णाटदेशे गिरिशेन साकम् ॥
विभ्राजमाना मृगराजयाना
विभ्रान्तिमाधूय पुनाति भक्तम् ॥

35. कन्याकुमारी सुतरां वदान्या
वन्ये भगामिन्यखिलस्य मान्या ॥
सम्प्रेक्ष्यते येन जनस्स धन्य
स्सम्भावमाणं पशुमाहुरन्यम् ॥

36. कारणेन वर्जिता प्रपञ्चिता दयापया
कालमेघनामविप्रदत्तहृद्यविद्यया ॥
सा निशाटवंशशत्रुमित्रनेत्रचन्द्रिका
चक्रराजवासिनी विलासिनी हसत्वितः ॥

=

॥ इति श्रीरमणभगवत्पादान्ते
वासिनो वासिष्ठस्य नरसिंह
सूनोर्गणपतेः कृतावुमासह
स्रे पञ्चदशो गुच्छः ॥ ॥

=

Facsimile of Ganapati Muni's Handwriting
(from an older version of Umasahasram)

# तत्त्वघण्टाशतकम्

यं विदुर्धवलं केशं हरेरतुलतेजसः ।
यः प्रलम्बासुरं हत्वा चक्रे लोकस्य मङ्गलम् ॥ १॥

बलेन विस्मिता यस्य पृथिवी सचराचरा ।
कृष्णस्यापि च पूज्यो यो बभूवाग्रजतां गतः ॥ २॥

सङ्कर्षणस्यांशमनन्तशक्तिम्
अनन्तनामानममुं नमामि ।
रामं तृतीयं रमणीयगात्रं
रमानिवासाननपुण्डरीकम् ॥ ३॥

अथ तत्त्वं प्रवक्ष्यामो यस्य ज्ञानाद्विमुच्यते ।
इह मन्दमतिर्मर्त्यस्तितीर्षुर्भवसागरम् ॥ ४॥

करपादादिसंयुक्तो योऽयं देहः प्रदृश्यते ।
किं सोऽहमथवा प्राणः किं चेतः किमुतेतरत् ॥ ५॥

अहं कुतस्समायातो गमिष्यामि च कुत्र वा ।
स्वतन्त्रः परतन्त्रो वा दासो वांशः स एव वा ॥ ६॥

विभूतयः कतीशस्य याभिर्व्याप्तमिदं जगत् ।
कृता इत्यादयः प्रश्ना जिज्ञासुभिरनेकशः ॥ ७॥

उत्तराणि तु दत्तानि तैस्तैः प्राज्ञैः पृथक्पृथक् ।
तेन सङ्कीर्णमतयो भवन्त्यपि मनीषिणः ॥ ८॥

एवं तत्त्वे विप्रकीर्णे तैस्तैराचार्यभाषितैः ।
वदाम एकं निर्धार्य यच्छ्रेयो यच्छ्रुतं परम् ॥ ९॥

प्रकाशमाना भूतेषु सर्वावस्थासु सर्वदा ।
सर्वोत्तमा विजयते चिदेका सर्वमङ्गला ॥ १०॥

यञ्चश्च भास्करविम्बस्थः परमात्मा समीरितः ।
हृदये योऽस्मदादेश्च भेदाभावस्तयोः श्रुतः ॥ ११॥

परमस्य च जीवस्य भेदश्चेत्खभुवोरिव ।
आत्मत्वमुभयोस्सिध्येत्सन्ततैकान्वितं कथम् ॥ १२॥

प्रज्ञानत्वं श्रुतं लक्ष्म ब्रह्मणः परमात्मनः ।
जीवेऽपि दृश्यते ह्येतदस्मिंश्चैतन्यरूपिणि ॥ १३॥

यदि सिद्धान्ततो भेदो जीवात्मपरमात्मनोः ।
"तत्त्वमस्या" दिवाक्यानामर्थश्चाप्यनृजुर्भवेत् ॥ १४॥



ईश्वरं जगुरात्मानमृषयो मन्त्रदर्शिनः ।
वामदेवाम्भृणीगाधिपुत्रप्रभृतयोऽनघाः ॥ १५॥

यावद्देहे स्वविभ्रान्तिस्तावद्भिन्नोऽहमीशतः ।
यदाऽऽत्मानं विजानामि तदा सोऽहं न संशयः ॥ १६॥

अन्तर्यामिणमीशानं वदन्त्यन्येऽपि तद्विदः ।
तन्मते हृदयस्यैव जीवत्वं परिकल्पितम् ॥ १७ ॥

अन्तर्यामी स्वयं जीवः शङ्करेणाभिभाषितः ।
एवं तत्त्वे सुविज्ञाते कलहः को नु विद्यते ॥ १८ ॥

तस्मात्कश्चिन्नावमान्यो यस्येशो हृदि राजते ।
आत्मनः परमं स्थानं हृदयं गीयते बुधैः ॥ १९ ॥

हृदयं यन्त्रसङ्काशमात्मा विद्युत्समो मतः ।
आत्मनो हृदये चेष्टा यन्त्रे चेष्टा च विद्युतः ॥ २० ॥

अस्माकं हृदयं प्रोक्तं जीवस्यायतनं महत् ।
सूर्यस्य मण्डलं प्रोक्तमीशस्यायतनं महत् ॥ २१ ॥

तिस्रस्तु देवताश्रेष्ठास्सर्ववेदप्रभाषिताः ।
तत्राग्निं प्रथमं वित्त यो भूलोकपतिः स्मृतः ॥ २२ ॥

इन्द्रं द्वितीयं जानीत भुवर्लोकपतिस्तु यः ।
वायोश्चेन्द्रस्य तुल्यत्वाद्वायुर्वात्र द्वितीयकः ॥ २३ ॥

तृतीयस्सविता प्रोक्तः स्वर्लोकस्याधिनायकः ।
उताहो इन्द्र एवैको देवस्त्रिजगतः पतिः ॥ २४ ॥

तेजस्तु दिवि तस्यैव भजते सूर्यरूपताम् ।
पृथिव्यामग्निरूपत्वं हृदये चात्मरूपताम् ॥ २५ ॥

तेजो बहिर्गतं प्राहुरग्नीन्द्ररविरूपकम् ।
तदेवान्तस्समाविष्टमात्मेति परिगीयते ॥ २६॥

आदित्यानां द्वादशानां ज्ञेया दैवतरूपता ।
एकादशानां रुद्राणां विज्ञेया प्राणरूपता ॥ २७॥

वसूना गीतमष्टानां लोकात्मत्वं मनीषिभिः ।
एते त्रयो देवगणाः सकलागमसम्मताः ॥ २८॥

वसवस्त्वधिलोकं स्युरादित्यस्त्वधिदैवतम् ।
अध्यात्मं कीर्तिता रुद्रास्तत्त्वविद्भिर्विचक्षणैः ॥ २९॥

आदित्यानामहं विष्णुरिति कृष्णस्मृतिः स्वयम् ।
तस्मादादित्य एवायं योऽसौ विष्णुः प्रगीयते ॥ ३०॥

पाणीन्द्रियं यदीशस्य लोकशिल्पविचक्षणम् ।
त्वष्टारं दैवतं तस्य मुनयस्सम्प्रचक्षते ॥ ३१॥

वेदस्य माता शब्दात्मा पावनेभ्यश्च पावनी ।
या वाक्समस्तनाथस्य तद्देवो ब्रह्मणस्पतिः ॥ ३२॥

स एव सविता नाम प्रोक्तः कैश्चन पण्डितैः ।
भिद्यते सवितुस्सोऽयं सूर्यमण्डलवाचकात् ॥ ३३॥

येन सर्वं विसृजति त्रैलोक्यक्षेमहेतवे ।
तत्प्राहुरिन्द्रियं मित्रस्तद्दैवतमुदीर्यते ॥ ३४॥

अन्तर्यामीति यस्सर्वभूतानां हृदयस्थितः ।
जीवो वैश्वानरं नाम तस्यांशं दैवतं विदुः ॥ ३५॥

पादस्सर्वाणि भूतानि यदस्य परमात्मनः ।
अंशः पादेन्द्रियाधीशस्तस्मात्संसारचालकः ॥ ३६॥

मण्डले त्वयमेवांशो विष्णुरित्यभिधीयते ।
हृदये त्वयमेवांशः प्रोक्तो वैश्वानरो बुधैः ॥ ३७॥

निषिञ्चत्यत्र यद्रेतः सर्वसर्गप्रवर्तकम् ।
तल्लिङ्गं परमेशस्य धाता तस्य तु दैवतम् ॥ ३८॥

येनाददाति सकलं रसादि जगतां प्रभुः ।
इन्द्रियं रसनाख्यं तत्तद्देवो वरुणो मतः ॥ ३९॥

येन जिघ्रति भूतेशः सर्वेषां कर्मवासनाः ।
तद्घ्राणमर्यमा तस्य देवो नान्यस्ततो यमः ॥ ४०॥

इन्द्रियं श्रवणं नाम यदीशस्य प्रकीर्तितम् ।
विवस्वदाख्यमादित्यमामनन्त्यस्य दैवतम् ॥ ४१॥

दिग्देवताख्या तस्यैव भवतीत्यनुशुश्रुम ।
स पुमान्वनिता सा वा भवेद्दिव्ये तु विग्रहे ॥ ४२॥

विद्युद्रूपं परं ज्योतिर्नयनं परमेशितुः ।
अथवा सकलं ज्योतिर्नयनं सम्प्रकीर्त्यते ॥ ४३॥

देवानामस्मदादीनां भूतानां च समन्ततः ।
यद्दृष्टिसाधनं ज्योतिः सहस्राक्षस्य दैवतम् ॥ ४४॥

इन्द्रियाणां वरं चक्षुर्देवानां वासवो वरः ।
यश्चक्षुर्वासवं वेद स वेद सकलं जगत् ॥ ४५॥

वृत्राख्या तमसो ज्ञेया शक्राख्या ज्योतिषस्तथा ।
तस्माद्वृत्रस्य हन्तारं शक्रमाचक्षते बुधाः ॥ ४६॥

अक्ष्णोरन्तस्समाविष्टमादित्यं वासवात्मकम् ।
ध्यायन्ग्रन्थित्रयं भित्त्वा प्रयाति परमां गतिम् ॥ ४७॥

पूषा नाम य आदित्यः स त्वगिन्द्रियदैवतम् ।
शरीरमेष पुष्णाति सर्वेषां च शरीरिणाम् ॥ ४८॥

भूदेवताख्या तस्यैव भवतीत्यनुशुश्रुम ।
स पुमान्वनिता वा सा भवेद्दिव्ये तु विग्रहे ॥ ४९॥

भगः कीर्तिर्भगो लक्ष्मीर्भगो माहात्म्यमुच्यते ।
भगः कामस्समाख्यातो भगो रत्नं समीर्यते ॥ ५०॥

भग एव स्मृतं वीर्यं यत्नश्चापि भगः स्मृतः ।
एवं विभूतिस्तु भगो मनसः खलु दैवतम् ॥ ५१॥

चन्द्राभिधानं तस्यैव भवतीत्यनुशुश्रुम ।
स पुमान्वनिता वा सा भवेद्दिव्ये तु विग्रहे ॥ ५२॥

तद्वन्तं परमेशानं भगवन्तं प्रचक्षते ।
प्रत्यग्दृशां मुनीनां च भगवच्छब्द इष्यते ॥ ५३ ॥

लक्ष्मीः कामश्च वीर्यं च माहात्म्यं च पृथग्विधम् ।
सिद्धानां ज्ञानयुक्तानां प्रतितिष्ठन्ति चेतसि ॥ ५४ ॥

एवं द्वादश चादित्या व्याख्यातास्तत्त्वदर्शिना ।
प्रवरेण वसिष्ठानां नरसिंहस्य सूनुना ॥ ५५ ॥

एतेषां हेतुभूता ये प्राणा एकादश स्मृताः ॥
भूतात्मकास्ता भूतेशविभूतीः प्राहुरुत्तमाः ॥ ५६ ॥

रुद्राणां प्राणरूपाणां सूर्याणां देवतात्मनाम् ।
एकत्वं यो विजानाति तत्त्ववेत्ता स उत्तमः ॥ ५७ ॥

वैश्वानरस्य स्थानं तु पृथिवी सम्प्रकीर्तिता ।
स प्रोक्तः प्रथमो देवो देवतातत्त्ववेदिभिः ॥ ५८ ॥

अस्माकं पदवन्नैव विभोः कर्मास्पदं पदम् ।
ज्ञानस्यैव पदाभिख्या धर्मभूतस्य गीयते ॥ ५९ ॥

ऐश्वरं हृदये ज्ञानं सर्वभूतेषु भासते ।
तमंशं पार्थिवं प्राहुस्तथा वैश्वानरविदः ॥ ६० ॥

बिम्बे यदैश्वरं ज्ञानं दिननाथस्य भासते ।
दिव्यं तमंशं भाषन्ते तथा विष्णुं मनीषिणः ॥ ६१ ॥

उपाधिवशतो गायन्त्युभौ च पुरुषाकृती ।
पूर्वस्य प्रतिबिम्बोऽन्यः पूर्वः स्यान्मध्यमस्य तु ॥ ६२॥

सर्वेषामपि भूतानामन्तरे भाति यद्यपि ।
वैश्वनरोऽयं प्रथमः पृथग्विग्रहवर्जितः ॥ ६३॥

तथापि भुवि सञ्जातो यो मूलपुरुषो महान् ।
तत्रैव देवताख्यातिरभिमानविशेषतः ॥ ६४॥

त्वचस्तु देवता देवी या भूर्नारीस्वरूपिणी ।
तस्याश्च पृथिवी स्थानं विजानीत विचक्षणाः ॥ ६५॥

तुषारदीधितेर्बिम्बं यमस्य स्थानमुच्यते ।
पितॄणामपि सर्वेषां नायकस्स प्रकीर्तितः ॥ ६६॥

विष्णोर्लक्ष्मीसमेतस्य स्थानं स्यात्सूर्यमण्डलम् ।
वैकुण्ठमिति तस्यैव नाम गीतं परैर्बुधैः ॥ ६७॥

धाता साक्षात्परः प्रोक्तो भक्त्योक्तिस्तु विभूतिषु ।
समष्टेरिन्द्रियं बीजशालि वस्त्वेव तत्त्वतः ॥ ६८॥

अन्येषां देवतानां तु स्थानं मध्यममुच्यते ।
एवं स्थानानि यो वेद देवानां स कृती नरः ॥ ६९॥

आदित्यानां पतिर्विष्णुर्वासवो मरुतां पतिः ।
पितॄणां यम ईशानः पतिर्वैश्वानरो विशाम् ॥ ७०॥

आदित्येभ्यो द्वादशेभ्यो भिद्यन्ते विष्णुसेवकाः ।
आदित्या उभयेभ्यश्च भिद्यते सूर्यमण्डलम् ॥ ७१॥

शिवस्त्वेकादशः प्राणस्तत्त्वदृष्ट्यां निगद्यते ।
एष दैवतदृष्ट्यां तु वासवान्नातिरिच्यते ॥ ७२॥

वस्तुतो देवतैकैका प्रतिस्थानं प्रकीर्तिता ।
तद्विभूतय एवान्यास्तत्तत्स्थानेषु कीर्तिताः ॥ ७३॥

पृथिव्यात्मा वसुरियं शुक्रस्तु वसुरम्मयः ।
अग्निरूपो वसुर्भौमो वायुरूपो वसुर्बुधः ॥ ७४॥

स्थिरो वसुर्वियद्रूपो वसुस्सोमात्मकश्शशी ।
द्युरूपस्तु वसुर्जीवस्सूर्यरूपो वसुस्त्वसौ ॥ ७५॥

केचिद्देवगणान्भौमान्वसूनाचक्षते विदः ।
मध्यमस्थान्देवगणान् रुद्रांस्तु परिचक्षते ॥ ७६॥

आदित्यानुत्तमस्थानगतान् देवगणान् विदुः ।
स्थूलशक्तिमहाभागभूयस्त्वात्सोक्तिचातुरी ॥ ७७॥

सर्वेषामप्यधिष्ठानं परं ब्रह्म प्रकीर्तितम् ।
आकाशवत्सर्वगतं तत्तेजस्समुदाहृतम् ॥ ७८॥

अस्माकं हृदये यच्च देवानां हृदये च यत् ।
यच्च बिम्बे भगवतः सूर्यस्य दिवि राजतः ॥ ७९॥

यस्मिन्सर्वे वयं चापि यस्मिन्सर्वे दिवौकसः ।
यस्मिन्भानुश्चन्द्रमाश्च यस्मिन्निन्द्रश्च पावकः ॥ ८० ॥

यस्मिन्वायुर्मातरिश्वा यत्राकाशो महानयम् ।
यत्रापो यत्र पृथिवी यस्मिन्सर्वं प्रतिष्ठितम् ॥ ८१ ॥

तदेतन्निर्मलं ब्रह्म ज्योतिः परममक्षरम् ।
तद्विज्ञाय कृती मर्त्यो भवेन्नान्येन हेतुना ॥ ८२ ॥

बुद्धिः पराची संसारं प्रवर्तयति देहिनाम् ।
बुद्धिरेव परं ज्ञानं या प्रतीची मनीषिणाम् ॥ ८३ ॥

अहङ्कारो द्विधा प्राज्ञैः शुद्धोऽशुद्ध इतीर्यते ।
देहादिविषयोऽशुद्धः शुद्धः स्वात्मैकगोचरः ॥ ८४ ॥

अशुद्धा धीः पराची स्याच्छुद्धा प्रत्यग्गतिर्भवेत् ।
प्रतीच्या अपरो योगः प्रवक्तुं केन शक्यते ॥ ८५ ॥

अशुद्धाहङ्कृतिर्माया ज्ञानं शुद्धा त्वहङ्कृतिः ।
अन्विष्याहङ्कृतेर्मूलं विशुद्धाहङ्कृतिर्भवेत् ॥ ८६ ॥

देहात्मबुद्धिर्यावत्स्यादस्माकं देहधारिणाम् ।
तावद्दासवदस्माभिर्वर्तितव्यं परात्मनि ॥ ८७ ॥

यदा प्रतीची दृष्टिः स्यादस्माकं तत्त्वदर्शिनाम् ।
तदा दास्यान्महादुःखाद्विमुक्तिः सम्प्रजायते ॥ ८८ ॥

परतन्त्रे कुतस्सौख्यं स्वातन्त्र्यं मुक्तिरुच्यते ।
देहाभिमानमाधूय स्वतन्त्रस्सुखवान्भवेत् ॥ ८९॥

देहाभिमानी त्वाशाभिस्सर्वतो दूषिताशयः ।
आदौ स्वमनसो दासः परेषां भविता ततः ॥ ९०॥

मनो येन जितं तस्य दास्यदुःखं विनश्यति ।
अकामस्य कुतः किं वा भवितव्यं महात्मनः ॥ ९१॥

इदं विज्ञाय यश्शास्त्रं यथोक्तमनुतिष्ठति ।
गतभेदस्स लभते भगवच्चरणामृतम् ॥ ९२॥

ऋषिभिर्वामदेवाद्यैर्यद्दृष्टं मन्त्रदर्शिभिः ।
तस्य शास्त्रस्य सारोऽयं मया सङ्गृह्य कीर्तितः ॥ ९३॥

अस्माभिस्सकलैर्मान्यो भगवान्बादरायणः ।
येनार्थवन्ति सूत्राणि चक्रिरे तत्त्वदर्शिना ॥ ९४॥

स चापि भगवान्मान्यश्शङ्करो विदुषां वरः ।
येन भेदमतिर्धूता जीवात्मपरमात्मनोः ॥ ९५॥

मान्यस्स यतिराजोऽपि प्रपत्तिर्येन दर्शिता ।
विचार्य संकलं शास्त्रं भक्तानुग्रहकाम्यया ॥ ९६॥

अंशावतारः पवनस्य मान्यो
मध्वश्च माध्वीतुलितोक्तियुक्तः ।

यो भेदवादं कथयन्नरेषु
सर्वोत्तमत्वं स्वभुवो बभाण ॥ ९७॥

स चापि वल्लभाचार्यो मान्यो बुद्धिमतां वरः ।
शुद्धाद्वैतमतं येन स्थापितं धरणीतले ॥ ९८॥

श्रीकण्ठस्स च सम्मान्यस्सर्वागमविशारदः ।
येन शैवमतं भूम्यां योगिश्लाघ्यं प्रवर्तितम् ॥ ९९॥

ब्रह्म दास्येन योगेन ज्ञानेन च मनीषिणः ।
अर्चयन्तश्चिन्तयन्तः प्राप्नुवन्तीति मे मतिः ॥ १००॥

वेदान्सशास्त्रशतकान्सकलान्विचार्य
प्राचामृगागमदृशां मतमाददानः।
क्षेत्रे फणीश्वरकलाजनितस्य पुंसो
घण्टाशतं गणपतिः कविराडकार्षीत् ॥ १०१॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतेः कृतिः तत्त्वघण्टाशतकं समाप्तम् ॥

# तन्त्रहृदयम्

**अभिधानपटलः प्रथमः**

श्रीकण्ठः केशवोऽकारो निवृत्तिरलिकस्थली ।
प्रतिष्ठा वृत्तमाकारोऽनन्तो नारायणोऽहिराट् ॥ १ ॥

इकारो माधवः सूक्ष्मो विद्या दक्षिणलोचनम् ।
शान्तिस्त्रिमूर्तिर्गोविन्द ईकारो वामलोचनम् ॥ २ ॥

अमरेशो विष्णुरुः स्यादिन्धिका दक्षिणश्रुतिः ।
षष्ठोऽर्घीशः श्रुतिर्वामा दीपिका मधुसूदनः ॥ ३ ॥

ऋकारो देविका नासा भारभूतिस्त्रिविक्रमः ।
ॠकारो वामनासा स्यान्मोचिका वामनोऽतिथिः ॥ ४ ॥

ऌकारः श्रीधरः स्थाणुः परा दक्षिणगण्डगः ।
सूक्ष्मा हरो हृषीकेशो दशमो वामगण्डगः ॥ ५ ॥

सूक्ष्मामृता पद्मनाभौ झिण्टीशोष्ठभगा अयि ।
दामोदरोऽधरो ज्ञानामृतैकारस्तु भौतिकः ॥ ६ ॥

ओकाराप्यायनी सद्योजाताः सङ्कर्षणो द्विजः ।
अधो द्विजो वासुदेव आविव्यापिन्यनुग्रहः ॥ ७ ॥

प्रद्युम्नो बिन्दुरक्रूरो व्योमरूपा बिलं शशी ।
सर्गोऽनिरुद्धोऽनन्ताऽऽस्यान्महासेना विसर्गकः ॥ ८ ॥

चक्री क्रोधीश्वरो ब्रह्मा कः सृष्टिर्दक्षिणो भुजः ।
दक्षिणः कूर्परः खः स्याद्दद्धिश्चण्डीश्वरो गदी ॥ ९ ॥

हेरम्बो मणिबन्धो गः शाङ्र्ङ्गी पञ्चान्तकः स्मृतिः ।
दक्षिणाङ्गुलिमूलङ्घः खड्गी मेधा शिवोत्तमः ॥ १० ॥

संज्ञैकरुद्रः शङ्खी स्यादङ्गुल्यग्रं ङकारकः ।
कूर्मश्चलो वामबाहुश्चो हली स्वर्णदेवता ॥ ११ ॥

छः शनिः कूर्परो वामो मुसली द्युतिरेकदृक् ।
जस्तु शूली स्थिरा वाममणिबन्धश्चतुर्मुखः ॥ १२ ॥

स्थितिर्वामाङ्गुलीमूलं पाश्यजेशो झकारकः ।
यमः सर्वोङ्कुशी सिद्धिर्वामाङ्गुल्यग्रगश्च ञः ॥ १३ ॥

स्कन्दो मुकुन्दः सोमेशो दक्षिणोरुर्जरा च टः ।
नन्दजः वालिनी दक्षजानुलाङ्गलिनौ च ठे ॥ १४ ॥

क्षान्तिश्चप्दालको नन्दी डकारो दक्षगुल्मगः ।
ढोऽर्धयोषो नरः पादाङ्गुलीमूलग ऐश्वरी ॥ १५ ॥

उमेशो णो नरकजित्पादाङ्गुल्यग्रगो रतिः ।
तीव्रस्तकार आषाढी वामोरुः कामिका हरिः ॥ १६ ॥

कृष्णो दण्डी विशालाक्षी वामजानु थकारकः ।
अत्रीशो ह्लादिनी सत्यो दः शैलो वामगुल्मगः ॥ १७॥

सव्यपादाङ्गुलीमूलन्धे मीनप्रीतिसात्वताः ।
ने वामाङ्घ्र्यङ्गुलीशृङ्गनादिनीमेषशौरयः ॥ १८॥

लोहितो दक्षिणं पार्श्वं शूरस्तीक्ष्णा नृपश्च पे ।
फकारे तु शिखी रौद्री वामपार्श्वं जनार्दनः ॥ १९॥

अभया भूधरः पृष्ठञ्छागलाण्डो बकारकः ।
विश्वमूर्तिर्द्विरण्डेशो नाभिर्निद्रा भकारके ॥ २०॥

मे महाकालवैकुण्ठतन्द्रोदरदिवाकराः ।
ये यामुनोरो वायुत्वग्वालिक्षुत्पुरुषोत्तमाः ॥ २१॥

दक्षिणं विग्रहस्यार्धं क्रोधिनी रुचिरो बली ।
रक्तमग्निर्भुजङ्गेशो रेफस्तन्त्रेषु गीयते ॥ २२॥

पिनाकीशः ककुञ्देशः क्रिया शक्रो बलानुजः ।
मांसधातुर्वसुमती लकारः परिकीर्तितः ॥ २३॥

वामं कलेबरस्यार्धं उत्कारी यादसां पतिः ।
बालः खड्गीश्वरो मेदः सलिलं च वकारकः ॥ २४॥

हृदादिदक्षपाण्यन्तो वृषघ्नोऽस्थिबकेश्वरः ।
शङ्कुकर्णः सुखं मृत्युः शवर्णः परिकीर्तितः ॥ २५॥

हृदादिवामपाण्यन्तो मज्जाश्वेतेश्वरो वृषः ।
परुषश्च हरिद्राभा षकारः परिकीर्तितः ॥ २६॥

हृदादिदक्षपादान्तः शुक्रं हंसाह्वयो भृगुः ।
समयः सङ्गतिश्चेति सकारः परिकीर्तितः ॥ २७॥

हृदादिवामपादान्तो वराहो नकुलीश्वरः ।
अरुणा गगनं प्राणो हकारः परिकीर्तितः ॥ २८॥

हृदयाद्युदरं श्यामा ळकारो विमलः शिवः ।
संवर्तको हृदाद्यास्यं क्षे वज्रा नृहरिर्गृहम् ॥ २९॥

यत्राङ्गान्यवशिष्टानि संज्ञायामुत्तरत्र वा ।
भागो दक्षिण ऊर्ध्वो वा तत्र ग्राह्यो विचक्षणैः ॥ ३०॥

सङ्ख्येन कुत्रचित्संज्ञा सङ्ख्याभिरपि कुत्रचित् ।
क्वचिद्रूपेण योगेन क्वचिदाकृतितो लिपेः ॥ ३१॥

सद्योजातश्चन्द्रचूडस्त्रिमात्रस्त्रिवृदुच्यते ।
तारको ब्रह्म वेदादिस्तारश्च प्रणवो ध्रुवः ॥ ३२॥

चक्री धरा शान्तिरनुष्णभानुः
श्लिष्टाः प्रसूनायुधबीजमुक्तम् ।
क्रोधीश्वरः कृष्णगतिस्त्रिमूर्तिः
शशीमिलन्तो रसना च काली ॥ ३३॥

क्रोधीश्वरस्थानगते वराहे
काल्येव गौरी गिरिजा त्रपा च ।
लोकस्य राज्ञी हृदयस्य लेखा
लोकश्च माया गिरिशस्य जाया ॥ ३४ ॥

बके तु बीजं कमलासनाया
दामोदरश्चन्द्रयुतस्तु वाणी ।
प्राणोऽर्धिनाथामृतरश्मियुक्तः
क्रोधस्य कूर्चस्य च बीजमुक्तम् ॥ ३५ ॥

अनुग्रहेशेन्दुयुतं वराहं
प्रसादबीजं कथयन्ति सन्तः ।
(तदेव बीजं प्रवदन्ति दोग्ध्रीं
वैरोचनीं तां तपसा ज्वलन्तीम् । अथवा)
नारायणश्चन्द्रयुतस्तु पाशः
करेफताराःसहितास्सृणिः स्यात् ॥ ३६ ॥

कालस्तु शक्तिः सचतुर्दशास्यो
वधूः सतीव्रानलशान्तिचन्द्रः ।
यशस्विनी शापविवर्जिता सा
तारैव तारागमविद्भिरुक्ता ॥ ३७ ॥

नादिनी कमलिनी प्रियसर्गैः
पल्लवं तु हृदयस्य वदन्ति ।
संयुताः समयवारुणशेषाः
शेषयुक् च नकुलीशिरसस्तु ॥ ३८ ॥

ठद्वयं भणितमग्निकलत्रं
पल्लवं तदिदमागमविद्भिः ।
वार्वृषोऽस्वरगुहश्च शिखायाः
सेन्धिकेन्दुगगनं कवचस्य ॥ ३९॥

वार्यधोरदयुतं धवलेशो
निःस्वरः शरभवो नयनानाम् ।
अस्त्रपल्लवमुदाहृतमार्यैः
पान्त्यमस्वरचमूपतिचूडम् ॥ ४०॥

॥ इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतेः
कृतौ तन्त्रहृदये वर्णबीजपल्लवाभिधानं नाम प्रथमः पटलः ॥

## कालीपटलो द्वितीयः

शक्तेर्विभूतिभेदेन विद्याभेदाः प्रकीर्तिताः ।
तन्त्रेषु पूर्वैराचार्यैर्दशशीघ्रफलप्रदाः ॥ १ ॥

काली तारा सुन्दरी च भुवनेशी च भैरवी ।
छिन्ना ज्येष्ठा च बगला मातङ्गी कमलात्मिका ॥ २ ॥

### कालीमहाविद्या

जिह्वात्रयं कूर्चयुगं त्रपे द्वे
सत्यो नृसिंहः सह माधवेन ।
रतिः सयोनिर्द्रुहिणस्सवृत्तः
पुरन्दरो दक्षिणनेत्रयुक्तः ॥ ३ ॥

क्रोधीशसूक्ष्मामृतयोः समेतं
द्वन्द्वं पुनश्च त्रिगुणा रसज्ञा ।
क्रोधावुभौ लोकयुगं कृशानोः
कान्तेति विद्या कथितेयमाद्या ॥ ४ ॥

भैरव उष्णिक् काली
मुनिमुख्या अस्य मन्त्रराजस्य ।
बीजमभाणि रसज्ञा
शक्तिलोकोऽथ कीलकं क्रोधः ॥ ५ ॥

विनियोगः सर्वासां
सिद्धिनां साधने समाख्यातः ।
षड्दीर्घयुक्तकाल्या
करविन्यासः तथाङ्गविन्यासः ॥ ६॥

निगृह्णन्ती चेतो निजपदरतानां रिपुगण-
प्रणाशं कुर्वाणा सकलवरदापत्प्रशमनी ।
पिशाचस्त्रीवेषा सह कपटभूतेन विभुना
श्मशाने क्रीडन्ती हृदि वसतु काली मम सदा ॥ ७॥

निशि लक्षं दिवा लक्षं दिव्यभावमुपाश्रितः ।
संश्रितो वा वीरभावपशुभावौ जपेन्मनुम् ॥ ८॥

अयुतं जुहुयात् पश्चात् प्रयोगार्हो भवेन्मनुः ।
स्त्रियो न निन्देन्नो वीरान् कालीभक्तस्य तद्व्रतम् ॥ ९॥

करोतीत्यनया वृच्या निष्पन्नं बीजमादिमम् ।
इह तस्य षडावृत्या सृष्टौ शक्ततमो मनुः ॥ १०॥

सर्वेषामपि भावानां स्रष्टा केवल ईश्वरः ।
तन्नियत्यविरोधेन नृणां स्रष्टृत्वमिष्यते ॥ ११॥

यत्कवित्वप्रदा विद्या काल्या इत्यागमे प्रथा ।
विद्याशक्त्येकदेशस्य बोद्धव्यं तत्प्रदर्शनम् ॥ १२॥

ईशः स्यात्सर्वसिद्धीनां विद्यामेतामुपाश्रितः ।
लोकेश्वरी चतुष्कस्य प्रभावात्साधको जनः ॥ १३॥

क्रोधबीजचतुष्कस्य प्रभावादहितक्षये ।
समर्थो मन्त्रराजोऽयं शिरसा तुष्टिपुष्टिकृत् ॥ १४ ॥

भुवनान्तोचितं भीमं बिभ्रत्या अपि विग्रहम् ।
भक्तानुकूल्यं वक्त्यत्र विद्यायां दक्षिणापदम् ॥ १५ ॥

कालमेव विदुः कालीं स्त्रीलिङ्गेन विपश्चितः ।
कर्मेन्द्रियं पाणिसंज्ञं कालीत्यध्यात्मचिन्तकाः ॥ १६ ॥

हरस्य पक्तुः खलु शक्तिरेव
कालश्च काली च बुधैरभाणि ।
प्रपञ्चनाथस्य पुमाकृतित्वे
नार्याकृतित्वं परदेवतायाः ॥ १७ ॥

पाणेः प्राधान्यतः प्राहुः क्रियासु सकलास्वपि ।
क्रियाशक्तिस्वरूपत्वात् कालिकां पाणिमिन्द्रियम् ॥ १८ ॥

आत्मा पक्ता स्फुरंश्चेति द्विविधः सम्प्रकीर्तितः ।
भूतानां परिणामस्य हेतुः पक्ता सदा ज्वलन् ॥ १९ ॥

मण्डले हृदये चेति द्वैविध्यं स्फुरतः स्मृतम् ।
आद्यो हिरण्यगर्भः स्यात् ब्रह्मा जीवोऽपरो विराट् ॥ २० ॥

जीवनामव्यक्तिपक्षे विराजः सूरयो विदुः ।
तस्यैव जातिपक्षे तु विष्णुनाम प्रचक्षते ॥ २१ ॥

पक्तारं सर्वभूतानां शिवमाहुर्महेश्वरम् ।
पक्तुश्च स्फुरतश्चापि विभेदो नास्ति वस्तुतः ॥ २२॥

जगत्कर्तुर्यथाऽस्माकं पाणिर्यद्यपि नेशितुः ।
व्यष्टौ विभूतिराद्यायास्तथाप्यत्र प्रदर्शिता ॥ २३॥

**आद्यैकाक्षरी**

पृथक् चोपास्यमम्बाया बीजमन्त्रं प्रचक्षते ।
अष्टसिद्धीश्वरो वाग्मी तेन जप्तेन वा भवेत् ॥ २४॥

**कामकलाविद्या**

अथानुविद्यामाद्याया वक्ष्ये कामकलाह्वयाम् ।
यस्यास्तन्त्रेषु बहुधा महिमा सम्प्रगीयते ॥ २५॥

कामो गणेशोऽनल शान्तिचन्द्री
क्रोधः सतारो जलजातगर्भः ।
हपूर्वरौद्रीदहनत्रिकोण-
ग्लावोयुताः पञ्चमबीजमुक्तम् ॥ २६॥

वृत्तान्वितौ चक्रिसहस्रनेत्रौ
सूर्याजगर्भौ द्रुहिणः सवृत्तः ।
भूर्दक्षनेत्रेण विपर्ययेण
बीजानि पञ्चाग्निवधूश्च मन्त्रः ॥ २७॥

ऋषिरस्य महाकालो बृहती छन्द उच्यते ।
काली कामकला नाम देवता परिकीर्तिता ॥ २८॥

प्रसूनमार्गणो बीजं क्रोधः शक्तिरुदीर्यते ।
कीलकं पञ्चमं बीजं विनियोगोऽखिलाप्तये ॥ २९॥

प्रत्येकं बिन्दुसंयुक्तनामाक्षरसमन्वितैः ।
बीजैस्तु पञ्चभिर्नाम्ना कराङ्गन्यास ईरितः ॥ ३०॥

विविधप्रहरणविद्या
पिधानवेत्रीं रिपुक्षये घोराम् ।
प्रेतभुवि सञ्चरन्तीं
पिशाचिकावेषमद्भुतं दधतीम् ॥ ३१॥

आहितपशुभयमोहं
कामकलानामभावतो दधतीम् ।
समलङ्कृतां शिवाभ्यां
पार्श्वद्वितये प्रचण्डरावाभ्याम् ॥ ३२॥

सर्वाङ्गशक्तिपूर्णां
जम्बूफलमेचकामदुष्टाङ्गीम् ।
कालीं ज्वलत् त्रिनयनां
ध्यायेत् संहारनायकासक्ताम् ॥ ३३॥

पुरश्चरणमाद्यावदस्यास्तन्त्रेषु गीयते ।
साधने सर्वसिद्धीनामेषा विद्योत्तमोत्तमा ॥ ३४॥

## गुह्यकालीविद्या

आद्याया अनुविद्याऽन्या गुह्यकाली समीर्यते ।
संश्रितो गुप्तविद्यां यां सर्वसिद्धीश्वरो भवेत् ॥ ३५॥

ध्रुवो रौद्री जातवेदो योनिप्रद्युम्नसंयुता ।
हंसो विद्यायुतो युक्ताः शैलसात्वतमाधवाः ॥ ३६॥

द्रुहिणो दहनः शेषी शक्रो दक्षिणनेत्रवान् ।
क्रोधस्यानन्तरं बीजं आद्यायां समुदीरितम् ॥ ३७॥

एकनेत्रो धरापूर्वगोविन्दतुहिनांशुमान् ।
पूर्वं मन्दाक्षतो बीजमाद्यायां सम्प्रदर्शितम् ॥ ३८॥

सीमन्तिनी पुनर्बीजं द्वितीयमिह दर्शितम् ।
हृदयं वह्नितरुणी विद्येयं षोडशाक्षरी ॥ ३९॥

अथर्वा ऋषिरस्य स्याज्जगती छन्द उच्यते ।
देवता गुह्यकाली स्यात्क्रोधो बीजमुदीर्यते ॥ ४०॥

शक्तिः स्यान्नवमं बीजं द्वितीयं कीलकं विदुः ।
द्विपञ्चत्रिद्विनेत्रे द्विवर्णैर्न्यास उदाहृतः ॥ ४१॥

ज्ञानरश्मिछटाटोपज्योतिर्मण्डलमध्यमाम् ।
लोकमानां दशदिशः कार्यभारात् प्रतिक्षणम् ॥ ४२॥

ततः शीतां यतः सख्यो यतो भक्ताः शिवो यतः ।
अन्यतो दिक्षु सर्वासु प्रज्वलत् तीव्रलोचनाम् ॥ ४३ ॥

भीमामाकर्षिणीं शूरां चञ्चलां धीमतीं दृढाम् ।
समदां सजवां सर्वग्राहिणीं सन्ततक्रियाम् ॥ ४४ ॥

विविधायुधविद्यासु निष्णातां शत्रुमर्दिनीम् ।
नायिकां सर्वसिद्धीनां गुह्यां कालीं विचिन्तयेत् ॥ ४५ ॥

शुद्धो लक्षं जपेन्मन्त्रमयुतं जुहुयाद्व्रती ।
ततः क्षमो भवेन्मन्त्रः सर्वसिद्धिप्रसाधने ॥ ४६ ॥

॥ इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतेः
कृतौ तन्त्रहृदये कालीपटलो द्वितीयः ॥

**तारापटलस्तृतीयः**

**तारामहाविद्या (तत्र त्र्यक्षरी)**

काञ्चिन्मायां पुरस्कृत्य सकूर्चा दृश्यते वधूः ।
नीलां सरस्वतीमेतां प्राहुरागमसारगाः ॥ १॥

**चतुरक्षरी**
अन्ततो विभ्रतीं शस्त्रं नीलामेकजटां विदुः ।

**पञ्चाक्षरी**
ध्वनन्तीमादितस्तारं तां तु गायन्ति तारिणीम् ॥ २॥

**तिसृणामृष्यादि**
अक्षोभ्य मुनिरेतेषां बृहती छन्द इष्यते ।
त्रयाणामपि मन्त्राणां तारा देवी परात्परा ॥ ३॥

क्रोधो बीजं शिवा शक्तिः कीलकं वामलोचना ।
षड्दीर्घभाजा शिवया कराङ्गन्यास ईरितः ॥ ४॥

तारा परावाक् कुहना पिशाची
सिद्धीश्वरी सिद्धपतेर्वधूटी ।
नमन्मनोनिग्रहकृद्रिपुघ्नी
ग्रन्थिच्छदा नन्दकरी विचिन्त्या ॥ ५॥

कामचारी जपेल्लक्षमयुतं जुहुयाज्जनः ।
ततः सिद्धा भवेद्विद्या त्रिविद्याऽभीष्टसाधने ॥ ६॥

विद्येयमचिरात्सिध्येल्लब्धा नारीमुखाद्यदि ।
तस्मादस्याः प्रपश्यामो नारीगुरुपरम्पराम् ॥ ७॥

शापः कृष्णावतारान्त इति पक्षं समाश्रिताः ।
न पठन्ति भृगुं केचिद्वधूबीजे मनीषिणः ॥ ८॥

अस्तु वा मास्तु वा शापो भृगुरत्राधिको मनौ ।
अर्थतः शब्दतश्चापि गुणायैव प्रकल्पते ॥ ९॥

अक्षरस्याप्यनुज्ञाता शक्तिश्चेच्छापमुक्तये ।
समयस्यावधिं तत्र प्रपश्यामो न सार्थकम् ॥ १०।

तस्माद्वसिष्ठशापस्य विमोक्षाय गुणाय च ।
पूर्णमेव वधूबीजं वक्तव्यं न भृगुं विना ॥ ११॥

महाचीनक्रमेणैतां उपास्यामाहुरम्बिकाम् ।
विशुद्धो मानसो भावो महाचीनक्रमो मतः ॥ १२॥

सिद्धेन पित्रा मात्रा वा पुरश्चरितविद्यया ।
अकृत्तनाभेर्जातस्य जिह्वायां त्र्यक्षरो मनुः ॥ १३॥

लेख्यो गोरोचनात्केन कुशेन सकुमारकः ।
असंशयं भवेद्विद्वान् विधाताचाद्भुतो गिराम् ॥ १४॥

सकलमपि वा वेदार्णं वा गुणार्णमथापि वा
मुनिजननुतं तारामन्त्रं जपेद्यदि मानवः ।

अमृतजलधीभूतः पूतः प्रयोगविशेषवित्
स इह वसुधालोके धारागिरामभिवर्षति ॥ १५॥

इममभिमुखीभूता शातोदरी कमलालया
हयगजघटापूर्णाभ्यर्णं समेत्य निषेवते ।
सविबुधमिदं विश्वं तस्य प्रयाति पुनर्वशं
प्रथितयशसां सिद्धीनां चाप्यमुं भजतेऽष्टकम् ॥ १६॥

सुविमलधियस्तस्य क्रोधाद्दृगम्बुधुतद्युती
रिपुजनवधूगण्डाभोगो भवेदुत पाण्डुरः ।
स खलु भुवनव्यासं चाप्तैः प्रमाणपुरःसरं
भणितमजरं भद्रं ज्योतिः परं परिपश्यति ॥ १७॥

तारणादुदिता तारा वागेव जगतां प्रसूः ।
जनयन्ती विभो शक्तिः सन्ततं शब्दमम्बरे ॥ १८॥

निनादो योऽयमव्यक्तः सन्ततः खे विजृम्भते ।
तपो दृष्टेषु मन्त्रेषु स गीतो ब्रह्मणस्पतिः ॥ १९॥

ब्रह्मणस्पतिमेवाहुरागमेषु गणेश्वरम् ।
तारा गणेशजननी तस्मादार्यैः प्रकीर्तिता ॥ २०॥

शब्दायमानस्य हरस्य शक्तिः
तारा च वाक् चापि बुधैरभाणि ।
प्रपञ्चनाथस्य पुमाकृतित्वे
नार्याकृतित्वं परदेवतायाः ॥ २१॥

वक्तुर्हिरण्यगर्भस्य शक्तिरुक्ता सरस्वती ।
ईशस्य तारा कथिता विशेषस्त्वनयोरयम् ॥ २२॥

अव्यक्तमेव प्रणवं जनयेदीशभारती ।
व्यक्ताश्च विविधा वाचः स्फुरतस्तु सरस्वती ॥ २३॥

ईशवाक् तामसी नीला व्यक्तो नास्या ध्वनिर्यतः ।
श्वेता हिरण्यगर्भस्य सात्त्विकी सत्यवादिनी ॥ २४॥

विराजो राजसी चित्रा वाणी विविधवादिनी ।
आद्ये तासामुपास्यत्वाद्देवते सम्प्रकीर्तिते ॥ २५॥

तारा तु प्रकृतिस्तासामन्ये तु विकृतीमते ।
तारां निषेवमाणेन सर्वा वाणी निषेविता ॥ २६॥

सत्यमेव प्रवक्तव्यं ताराभक्तेन नानृतम् ।
अनृतं प्रवदन् पापो हन्यादेव सरस्वतीम् ॥ २७॥

भिन्ना तिसृभिराख्याभिरेकरूपापि वस्तुतः ।
द्वितीयैवं महाविद्या वर्णिता पापनाशिनी ॥ २८॥

क्रियाशक्तिः पिशाचीव वामैव भुवने सताम् ।
तस्मात्काली च तारा च पिशाच्यौ सम्प्रकीर्तिते ॥ २९॥

॥ इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतेः
कृतौ तन्त्रहृदये तारापटलः तृतीयः॥

## सुन्दरीपटलश्चतुर्थः

### त्रिपुरसुन्दरीमहाविद्या

### तत्रादौ मूलम्

ब्रह्मा योनिः शान्तिरिन्द्रो भवानी
प्राणो हंसः सृष्टिरभ्रं धरार्या ।
हंसो ब्रह्मा भूतधात्री शिवेति
प्रोक्ता सेयं सुन्दरीमूलविद्या ॥ १॥

### आधारविद्या

अत्राद्यानामक्षराणां त्रयं चेत्
अभ्रं शुक्रं सृष्टिरन्यत्समानम् ।
लोपामुद्रा नाम साहादिविद्या
तामेवार्याः प्राहुराधारविद्याम् ॥ २॥

### तारतम्यपूर्वक उभयत्र कूटविभागः

ब्रह्मा प्राणश्चोदितौ शैववर्णौ
योनिः शान्तिर्भूर्भृगुः शक्तिवर्णाः ।
लोकेशानी शक्तिरुद्रोभयात्मा
मूलं तस्माच्छक्तमाधारतः स्यात् ॥ ३॥

आद्यं कूटं वाग्भवं युग्मकेऽस्मिन्
आर्यैरुक्तं कामराजं द्वितीयम् ।
तार्तीयीकं कथ्यते शक्तिकूटं
कूटान्येवं त्रीणि विद्याद्वयेऽपि ॥ ४ ॥

**षोडशी**

पद्मा गौरी मन्मथो ब्रह्मजाया
शक्तिस्तारः पार्वती मा त्रिकूटा ।
शक्तिर्वाणी कामलोकौ रमेति
श्रीविद्येयं षोडशी मन्त्रराज्ञी ॥ ५ ॥

शक्त्यन्तानामादितः कूटतोक्ता
तारादीनां कूटता स्यात् त्रयाणाम् ।
शक्त्यादीनां कूटतोक्ताऽवसाने
षट्कूटैवं मूलकूटैः सहेयम् ॥ ६ ॥

मूले येयं घस्रवर्णा त्रिकूटा
षोडश्यां सा सम्प्रदायात् त्रिवर्णा ।
तस्मादुक्ता नायिकेयं मनूनां
अष्टाविंशत्यक्षरी षोडशीति ॥ ७ ॥

श्रीबीजाढ्या षोडशी मूलविद्ये-
त्येके प्राहुर्वर्णसङ्ख्यां भजन्तः ।
सङ्गच्छन्ते नैव तन्त्राणि तेषां
नामव्याख्यानात्र किञ्चित्करी स्यात् ॥ ८ ॥

तिसृणामृष्यादि

मुन्याद्यास्युर्दक्षिणामूर्तिपङ्क्ति-
श्रीसुन्दर्योऽमुष्यमन्त्रत्रयस्य ।
बीजं प्राहुर्वाग्भवं शक्तिकूटं
शक्तिं प्राहुः कीलकं कामराजम् ॥ ९॥

आवृत्तेन द्विस्तु मन्त्रेण मूले
त्वाधारेवान्या स उक्तो बुधेन्द्रैः ।
षड्भिः कूटैरुच्यते मन्त्रनाथे
ध्यायेत् पश्चात् सर्वलोकाधिराज्ञीम् ॥ १०॥

बन्धूकपुष्पकमनीयरुचिस्त्रिनेत्रा
बालामृतांशुमुकुटेप्सितदाखिलाम्बा ।
स्निग्धा शिवे रिपुजने कुपिता समस्त-
सम्मोहिनी नतहिता ललिता विचिन्त्या ॥ ११॥

एतेषु तन्त्रचयसारतयोद्धृतेषु
मन्त्रेषु धीरमतिरन्यतमं गृहीत्वा ।
लक्षं जपेद्दशगुणं जुहुयात्सहस्रं
सिद्धो मनुर्भवति काम्यजयाय पश्चात् ॥ १२॥

तस्यालये भगवती कमला स्थिरा स्यात्
सद्यो वशे भवति तस्य जगत्समस्तम् ।
सोऽयं कृती रमयते हृदयेन युक्तान्
पीयूषसारतुलितैरनघैर्वचोभिः ॥ १३॥

निःशात्रवः स रमते चिरमत्र लोके
तं वृण्वते स्वयमुपेत्य च सिद्धयोऽष्टौ ।
साक्षात्करोति स परं भुवनस्य बीजं
यः सुन्दरीं जपति पूतमना मनुष्यः ॥ १४ ॥

तत्त्वाक्षरीन्निगमसारमुदाहरन्ति
मूलत्रिकूटयुतमागमसारमाहुः ।
तच्चाभ्यषेच्यखिलमन्त्रगणाधिपत्ये
श्रेष्ठत्रिबीजकलितं शरबीजरुद्धम् ॥ १५ ॥

प्रज्ञानभूतेश्वरधर्मभूत-
ज्ञानात्मिकेयं परदेवतोक्ता ।
हिरण्यगर्भस्य तु धर्मभूतं
ज्ञानं चतुर्विंशतिवर्णगम्यम् ॥ १६ ॥

यत्र स्फुटं केवलमात्मरूपं
तमीशबोधं कथयन्ति सन्तः ।
हैरण्यगर्भस्य उदारबोधो
विभासते यत्र जगच्च सर्वम् ॥ १७ ॥

हिरण्यगर्भस्य सदा समाधि-
र्नित्यश्चिदानन्दमयोऽभिलाष्यः
(ज्ञानं च लोकस्य विना विरोधं)।
भोगोऽपरेषान्निजरूपभोगी
भेदाग्रहात्तस्य लयं प्रयाति ॥ १८ ॥

ईशे त्वसङ्कीर्णतया समाधिः
नित्यश्चिदानन्दमयोऽभिलाष्यः ।
तदेव तत्त्वं स्पृहणीयमस्याः
श्रीमातुराचार्यमुखाच्छ्रुतं नः ॥ १९ ॥

बोधो विराजो विविधोऽतिभाति
विमुक्तये संसृतये यः स्यात् ।
विमुक्तये स्यात्तपतः प्रबोधो
बहिर्दृशः संसृतये विबोधः ॥ २० ॥

विराजिदेवीगतिरुत्तमा सा
विद्येशितुर्भाति समाधिकाले ।
सैवान्यदास्याद्विषयैर्विभक्ता
नानेव यत्र प्रतितिष्ठतीदम् ॥ २१ ॥

हरस्य बोद्धुः खलु शक्तिरेव
श्रीसुन्दरी धीश्च बुधैरभाणि ।
प्रपञ्चनाथस्य पुमाकृतित्वे
नार्याकृतित्वं परदेवतायाः ॥ २२ ॥

वियत्त्वनन्तं प्रथमं पुरं स्यात्
सूर्यस्य बिम्बं तु पुरं द्वितीयम् ।
पुरं जनानां हृदयं तृतीयं
मातुर्यदस्यास्त्रिपुरा तदेषा ॥ २३ ॥

प्राणेषु सेयं दशसु प्रदिष्टा
चक्षुर्मयी चिन्मयशक्तिरम्बा ।

ध्येयं हि जाबालमुनिर्महात्मा
तत्रैव बोधन्निजमाबभाण ॥ २४॥

विभ्राजतेऽधो हृदयस्य मूल-
मग्रं भ्रुवोरन्तरतश्चकास्ति ।
देवीपुरत्वं ज्वलतोः स तस्मा-
न्नासङ्गतँल्लोचनमण्डलस्य ॥ २५॥

य एवं विद्वान् सो नयनयुगले वाथ हृदि वा
जगद्धात्रीं रात्रिप्रियतमकलाबद्धमुकुटाम् ।
विविक्तां रूपाद्यैरखिलविषयैः संविदमुमां
अमुञ्चन्तो नित्यं दधति सकलं तैः खलु जितम् ॥ २६॥

बाला

प्रीतये मुनिविदामनुविद्या
प्रोच्यते बहुगुणा त्रिपुरायाः ।
वाक् स्मरो भृगुरनुग्रहसर्गः
त्र्यक्षरीयमखिलागमगीता ॥ २७॥

श्रेष्ठमाहुरनुलोमविलोमा-
जप्यमानमिममुत्तममन्त्रम् ।
षोडशीवदृषिमुख्यममुष्याः
देवता भगवती तु कुमारी ॥ २८॥

कूटानां त्रयमिव मूलमन्त्रराजे
बीजानां त्रयमिह संज्ञया प्रदिष्टम् ।

विद्येयं भवति विराट् प्रबोधरूपा
मूर्धास्यानयनयुगं च हृत्पुराणि ॥ २९॥

अनुलोमविलोमतः षडङ्गं
त्रितयेनात्र तु मूलवर्णकानाम् ।
परिशुद्धमनास्ततो मनुष्यो
हृदि देविमनुसन्दधीत बालाम् ॥ ३०॥

अरुणा करुणातरङ्गिताक्षी
सुभगा पातकहृत्कविर्जपन्ती ।
अमृतांशुकलाकनत्कलापा
नववर्षा हृदि बालिका विचिन्त्या ॥ ३१॥

लक्षत्रितयं तु जपः
त्रिंशत्साहस्रमुच्यते होमः ।
तदनु मनुः संसिद्धः
साधयितुर्भवति कल्पद्रुः ॥ ३२॥

मैथिलास्तु कवयन्ति नीलया
द्राविडास्तु कवयन्ति बालया ।
तद्वचोऽमृतवितृप्तचेतसां
किन्नु वामनयनोष्ठलालया ॥ ३३॥

**उपसंहारः**

एतास्तिस्रः पराविद्याः काली तारा च सुन्दरी ।
आद्ये भेदौ क्रियाशक्तेर्ज्ञानशक्तिरथोत्तरा ॥ ३४॥

पाणित्वं स्थूलदृष्ट्योक्तं प्राणरूपैव कालिका ।
चक्षुस्त्वं स्थूलदृष्ट्योक्तं चितिरूपैव सुन्दरी ॥ ३५॥

गृहीत्वा तु चितिच्छायां प्राणो वागात्मतां व्रजेत् ।
तद्वाक् प्रवहति ज्ञानं क्रियारूपापि वस्तुतः ॥ ३६॥

विरला ज्ञानशक्तिः स्यात् क्रियाशक्तिर्घना मता ।
विरलत्वघनत्वाभ्यां शक्तेर्द्वैविध्यमागतम् ॥ ३७॥

॥ इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतौ तन्त्रहृदये सुन्दरीपटलश्चतुर्थः॥

## भुवनेश्वरीपटलः पञ्चमः

### भुवनेश्वरीमहाविद्या

अरुणां केवलामुक्त्वा क्रोधिनीमथ केवलाम् ।
शान्तिं ततः समुच्चार्य व्योमरूपां समुद्धरेत् ॥ १॥

चतुर्थीयं महाविद्या चतुःशक्तिसमुद्भवा ।
ऋष्याद्याः शक्तिगायत्री भुवनेश्य्यः प्रकीर्तिताः ॥ २॥

षड्दीर्घयुक्तेन बीजेन षडङ्गन्यासमाचरेत् ।
अथ ध्यायेन्महादेवीं सर्वभूतैकमातरम् ॥ ३॥

पापघ्नी वत्सला सर्वदायिन्यापत्प्रणाशिनी ।
तप्तकार्तस्वरच्छाया ध्येया चित्तेन शाम्भवी ॥ ४॥

द्वात्रिंशच्छतसाहस्रं जपेद्विद्यामनन्यधीः ।
परमं पश्यति ज्योतिः सर्वग्रन्थीन् विभिद्य सः ॥ ५॥

मूलविद्या यथाम्बायाः सावित्रीतो विशिष्यते ।
तथाम्बाबीजविद्येयं प्रणवाच्च विशिष्यते ॥ ६॥

ऋचस्तु योनिं भूतानामाकाशमदितिं विदुः ।
भणन्त्यनन्तां तामेव तन्त्राणि भुवनेश्वरीम् ॥ ७॥

अधः पृथिव्याश्च दिवः परस्ता-
द्यच्चान्तराद्दृश्यमिदं समस्तम् ।

वदत्यमुष्यामदितौ तदोतं
प्रोतं च गार्गीं प्रति याज्ञवल्क्यः ॥ ८॥

ओतं च प्रोतमेतस्यामदितौ भुवनं यतः ।
तदेषा प्रकृतिः प्राज्ञैरुच्यते भुवनेश्वरी ॥ ९॥

ईशस्य प्रथमा दृष्टिराकाश इति भण्यते ।
अशेषलोकचित्राणां भित्तिरन्तविवर्जिता ॥ १०॥

इच्छाशक्तिरियं ज्ञेया परमस्य महेश्वरी ।
इच्छेक्षा प्रथमा दृष्टिरित्यनर्थान्तरं भवेत् ॥ ११॥

प्रथमेक्षा यथास्माकं स्वप्ने देशाय कल्पते ।
प्रथमेक्षा तथेशस्य सर्गे देशाय कल्पते ॥ १२॥

अनन्तराणां वृत्तीनामुक्ता ज्ञानक्रियात्मता ।
व्यापारः प्रथमः शक्तेर्देशभाव उदाहृतः ॥ १३॥

भित्तिस्थानं विना देशं न च ज्ञानं न च क्रिया ।
तच्चतुर्थीं विना देवी न तृतीया न चादिमे ॥ १४॥

तामेतामखिलेशानीं मूलप्रकृतिमव्ययाम् ।
भित्तिभूतामशेषस्य मायां प्राज्ञाः प्रचक्षते ॥ १५॥

व्यासस्य सर्वत्र हरस्य शक्तिः
देशश्च माया च बुधैरभाणि ।

प्रपञ्चनाथस्य पुमाकृतित्वे
नार्याकृतित्वं परदेवतायाः ॥ १६ ॥

पिण्डेषु भुवनेशानी श्रोत्रमिन्द्रियमीर्यते ।
श्रुत्यन्तचिन्तकैः श्रोत्रं दिग्दैवत्यं हि कथ्यते ॥ १७ ॥

## सारस्वतचिन्तामणिः

मन्त्रोऽयं भुवनेश्वर्याः संरुद्धस्त्रिवृता यदि ।
भवेच्चिन्तामणिर्नाम श्रेष्ठः सारस्वतप्रदः ॥ १८ ॥

## अन्नपुर्णा

अनुविद्यामथैतस्याश्चतुर्थ्याः परिचक्ष्महे ।
दारिद्र्यं दूरतः कुर्यात्साधको यामुपाश्रितः ॥ १९ ॥

आदिः श्रुतीनां भुवनस्य राज्ञी
शुद्धान्तनारी मधुसूदनस्य ।
प्रसूनबाणो हृदयं द्विरण्डः
पञ्चान्तको वारि हरिः ससूक्ष्मः ॥ २० ॥

त्विषां पतिर्माधवमञ्चशायी
श्लिष्टोऽथसूक्ष्मामृतया वराहः ।
ऊष्मादिरन्तस्थसमापकेन
साकं स वामेतरलोचनोऽग्निः ॥ २१ ॥

आदिः स्वराणामनुनासिके द्वे
दन्त्ये युतेऽर्घीशयुतो नृपालः ।
रतित्रिकोणी दहनस्तदन्तः
पुरेश्वरी चेति मनुर्नवार्णः ॥ २२॥

ऋषिः स्यान्नाभिजन्मास्य छन्दः कृतिरुदीर्यते ।
देवतात्वन्नपूर्णेशी बीजादि गिरिजादिकम् ॥ २३॥

षड्दीर्घभाजा बीजेन कराङ्गन्यासमाचरेत् ।
ततो ध्यायेदन्नपूर्णां विशालाक्षीं महेश्वरीम् ॥ २४॥

तप्तस्वर्णरुचिः सुधांशुमुकुटा क्षोणीरमासेविता
माणिक्याभरणान्विता विरजसी चित्रांशुके बिभ्रती ।
अन्नं विग्रहधारिणे प्रददती नेत्रत्रयोल्लासिनी
विश्वाधीश्वरनाट्यलोकनरता ध्येयान्नपूर्णेश्वरी ॥ २५॥

लक्ष्मेकं जपेद्विद्यां जुहुयादयुतं जनः ।
ततो भवेत्प्रयोगार्हः सोऽयमत्युत्तमो मनुः ॥ २६॥

॥ इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो- र्गणपतेः
कृतौ तन्त्रहृदये भुवनेश्वरीपटलः पञ्चमः ॥

## षष्ठस्त्रिपुरभैरवीपटलः

### त्रिपुरभैरवीमहाविद्या

नकुलिहंसकृशानुगिरोयुताः
प्रथमबीजमुदारमुदाहृतम् ।
अरुणया भृगुणायुतमादितः
सदहनं स्मरबीजमनन्तरम् ॥ १॥

किटिशरीरभृता परिचुम्बिता
भवति शक्तिरधो सधनञ्जया ।
इयमशेषमनोरथदायिनी
सकलतन्त्रनुता खलु पञ्चमी ॥ २॥

बालाविद्यावदत्रापि बीजानां नामभिस्त्रिकम् ।
ऋष्यादि च विशेषस्तु देवी त्रिपुरभैरवी ॥ ३॥

आद्येन षड्दीर्घयुजा षडङ्गन्यास ईरितः ।
ततो ध्यायेज्जगद्धात्रीं देवीं त्रिपुरभैरवीम् ॥ ४॥

सोमशेखरा रामलोचना
मुण्डमालिका कण्ठभूषणा ।
चण्डशासना मोहिनीवरा-
ऽभीतिदा गतिः भैरवी मम ॥ ५॥

लक्षत्रयं जपेद्विद्यां दशांशं जुहुयाद् व्रती ।
एवं सिद्धे मनौ मन्त्री काम्यकर्मापि साधयेत् ॥ ६॥

तृतीया यादृशी विद्या तादृशीं पञ्चमीं विदुः ।
तयेव सकलं साध्यं अनयापि च विद्यया ॥ ७॥

तेजस्त्रिपुरभैरव्यास्तत्त्वमालोकितं बुधैः ।
पृथिवी चान्तरिक्षं द्यौरस्यास्तिस्रो मताः पुरः ॥ ८॥

पृथिव्यामग्निरूपेयमन्तरिक्षे मटित्तनुः ।
दिवि भास्करबिम्बात्मा शक्तिस्त्रिपुरभैरवी ॥ ९॥

प्रकाशकस्यैव हरस्य शक्तिर्भा भैरवी चापि बुधैरभाणि ।
प्रपञ्चनाथस्य पुमाकृतित्वे नार्याकृतित्वं परदेवतायाः ॥ १०॥

वह्निर्यः प्रथमे बीजे कृष्णवर्त्मा सपार्थिवः ।
बीजे वह्निः द्वितीये यः सशक्रस्तटिदात्मकः ॥ ११॥

तृतीयबीजे यो वह्निः मण्डलात्मा सभास्करः ।
एवं विदित्वा यो विद्वान् जपेत्तेनाखिलं जितम् ॥ १२॥

तेजो यद्रोचकं नाम त्वगिन्द्रियमुपाश्रितम् ।
अधिपिण्डं तदम्बायाः स्वरूपं परिचक्षते ॥ १३॥

तेजःसहकृतेनैव गृह्यते मातरिश्वना ।
स्पर्शः सङ्गच्छते तस्मात्तेजोरूपं त्वगिन्द्रियम् ॥ १४॥

॥ इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो- र्गणपतेः कृतौ तन्त्रहृदये षष्ठस्त्रिपुरभैरवीपटलः ॥

# अक्षरावलिः

श्रीकण्ठानन्तसूक्ष्माख्यां स्त्रिमूर्तिममरेश्वरम् ।
अर्घीशं भारभूतिं चातिथीशं स्थाणुकं हरम् ॥ १॥

झिण्टीशं भौतिकं सद्योजातं चानुग्रहेश्वरम् ।
अक्रूरं च महासेनं स्वररुद्रान्नमाम्यहम् ॥ २॥

अन्यान् क्रोधीशचण्डेशपञ्चान्तकशिवोत्तमान् ।
एकरुद्रं च कूर्मेशमेकनेत्रं चतुर्मुखम् ॥ ३॥

अजेशं सर्वसोमेशौ लाङ्गलीशं च दारुकम् ।
अर्धनारीश्वरं चोमाकान्तमाषाढिदण्डिनौ ॥ ४॥

अत्रिं मीनेशमेषेशौ लोहितं शिखिनं तथा ।
छगलाण्डं द्विरण्डेशं महाकालं च वालिनम् ॥ ५॥

भुजङ्गेशपिनाकीशखड्गीशान् बकमर्जुनम् ।
भृगुं च नकुलीशानं शिवं संवर्तकं नुमः ॥ ६॥

केशवाद्यनिरुद्धान्ताः कीर्तिताः स्वरविष्णवः ।
चक्री गदायुधः शार्ङ्गी खड्गी शङ्खी हलायुधः ॥ ७॥

मुसलीशूलहस्तश्च पाशवानङ्कुशी तथा ।
मुकुन्दो नन्दजो नन्दो नरो नरकजिद्धरिः ॥ ८ ॥

कृष्णः सत्यः सात्त्वतश्च शौरिः शूरो जनार्दनः ।
भूधरो विश्वमूर्तिश्च वैकुण्ठः पुरुषोत्तमः ॥ ९ ॥

बलो बलानुजो बालो वृषघ्नवृषहंसकाः ।
वराहो विमलः पश्चान्नृसिंहो विष्णवो हलाम् ॥ १० ॥

निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिरथेन्धिका ।
दीपिका देविका पश्चान्मोचिकानन्तरं परा ॥ ११ ॥

सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी ततः ।
व्यापिनी व्योमरूपा चानन्ता स्युः स्वरशक्तयः ॥ १२ ॥

सृष्टिश्चर्द्धिः स्मृतिर्मेधा संज्ञा काञ्चनदेवता ।
द्युतिः स्थितिः स्थिरा सिद्धिर्जरा तदनुपालिनी ॥ १३ ॥

क्षान्तिर्महेश्वरी पश्चात् रतिस्तदनुकामिका ।
विशालाक्षी ह्लादिनी च प्रीतिस्तदनु नादिनी ॥ १४ ॥

तीक्ष्णा रौद्र्यभया निद्रा तन्द्रा क्षुत्क्रोधिनी क्रिया ।
उत्कारी मृत्युसंज्ञा च पीता तदनुसङ्गतिः ॥ १५॥

अरुणा श्यामला वज्रा स्मृता व्यञ्जनशक्तयः ।
वर्णानामेवमीशानविष्णुशक्तिस्वरूपता ॥ १६ ॥

अत्र वर्णाः स्वरस्पर्शान्तस्स्थोष्माणस्ततः परम् ।
ककारश्च क्षकारश्चेत्येकपञ्चाशदीरिताः ॥ १७ ॥

भूतान्यजगवी बालो बलो वाली वराहकः ।
सप्तवालिनमारभ्य धातवः सम्प्रकीर्तिताः ॥ १८ ॥

चन्द्रसूर्यौ समाख्यातावनुस्वारमकारकं ।
गकारश्च षकारश्च गजाननषडाननौ ॥ १९ ॥

स्मृताः कलञवावर्णा ब्रह्मेन्द्रयमपाशिनः ।
कालः सकारः सम्प्रोक्तो हकारः प्राण उच्यते ॥ २० ॥

एकार उच्यते योनिरीकारः कमलोच्यते ।
ककारस्तु पुनः काम इति तन्त्रविदो विदुः ॥ २१ ॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिरक्षरावलिः समाप्ता ॥




Bhagavan Ramana Maharshi and Ganapati Muni
by Madam Jane Adams

# श्रीरमणगीता

# श्रीरमणगीता

## प्रथमोऽध्यायः

### उपासनप्राधान्यनिरूपणम्

महर्षिं रमणं नत्वा कार्तिकेयं नराकृतिम् ।
मतं तस्य प्रसन्नेन ग्रन्थेनोपनिबध्यते ॥ १॥

ईशपुत्रशके रामभूमिनन्दधरामिते ।
एकोनत्रिंशद्दिवसे द्वादशे मासि शीतले ॥ २॥

उपविष्टेषु सर्वेषु शिष्येषु नियतात्मसु ।
भगवन्तमृषिं सोऽहमपृच्छं निर्णयाप्तये ॥ ३॥

**प्रथमः प्रश्नः**

सत्यासत्यविवेकेन मुच्यते केवलेन किम् ।
उताहो बन्धहानाय विद्यते साधनान्तरम् ॥ ४॥

**द्वितीयः प्रश्नः**

किमलं शास्त्रचर्चैव जिज्ञासूनां विमुक्तये ।
यथा गुरूपदेशं किमुपासनमपेक्षते ॥ ५॥

तृतीयः प्रश्नः

स्थितप्रज्ञः स्थितप्रज्ञमात्मानं किं समर्थयेत् ।
विदित्वा परिपूर्णत्वं ज्ञानस्योपरतेरुत ॥ ६॥

चतुर्थः प्रश्नः

ज्ञानिनं केन लिङ्गेन ज्ञातुं शक्ष्यन्ति कोविदाः ।

पञ्चमः प्रश्नः

ज्ञानायैव समाधिः किं कामायाप्युत कल्पते ॥ ७॥

षष्ठः प्रश्नः

कामेन योगमभ्यस्य स्थितप्रज्ञो भवेद्यदि ।
सकामोऽमुष्य साफल्यमधिगच्छति वा न वा ॥ ८॥

एवं मम गुरुः प्रश्नानाकर्ण्य करुणानिधिः ।
अब्रवीत्संशयच्छेदी रमणो भगवानृषिः ॥ ९॥

प्रथमप्रश्नस्योत्तरम्

मोचयेत्सकलान् बन्धानात्मनिष्ठैव केवलम् ।
सत्यासत्यविवेकं तु प्राहुर्वैराग्यसाधनम् ॥ १०॥

सदा तिष्ठति गम्भीरो ज्ञानी केवलमात्मनि ।
नासत्यं चिन्तयेद्विश्वं न वा स्वस्य तदन्यताम् ॥ ११॥

## द्वितीयप्रश्नस्योत्तरम्

न संसिद्धिर्विजिज्ञासोः केवलं शास्त्रचर्चया ।
उपासनं विना सिद्धिर्नैव स्यादिति निर्णयः ॥ १२॥

अभ्यासकाले सहजां स्थितिं प्राहुरुपासनम् ।
सिद्धिं स्थिरां यदा गच्छेत्सैव ज्ञानं तदोच्यते ॥ १३॥

विषयांत्सम्परित्यज्य स्वस्वभावेन संस्थितिः ।
ज्ञानज्वालाकृतिः प्रोक्ता सहजा स्थितिरात्मनः ॥ १४॥

## तृतीयप्रश्नस्योत्तरम्

निर्वासनेन मौनेन स्थिरायां सहजस्थितौ ।
ज्ञानी ज्ञानिनमात्मानं निःसन्देहः समर्थयेत् ॥ १५॥

## चतुर्थप्रश्नस्योत्तरम्

सर्वभूतसमत्वेन लिङ्गेन ज्ञानमूह्यताम् ।

पञ्चमप्रश्नस्योत्तरम्

कामारब्धस्समाधिस्तु कामं फलति निश्चितम् ॥ १६ ॥

षष्ठप्रश्नस्योत्तरम्

कामेन योगमभ्यस्य स्थितप्रज्ञो भवेद्यदि ।
स कामोऽमुष्य साफल्यं गच्छन्नपि न हर्षयेत् ॥ १७ ॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे उपासनप्राधान्यनिरूपणं नाम प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः

### मार्गत्रयकथनम्

ईशपुत्रशके बाणभूमिनन्दधरामिते ।
चातुर्मास्ये जगौ सारं सङ्गृह्य भगवानृषिः ॥ १॥

हृदयकुहरमध्ये केवलं ब्रह्ममात्रं
ह्यहमहमिति साक्षादात्मरूपेण भाति ।
हृदि विश मनसा स्वं चिन्वता मज्जता वा
पवनचलनरोधादात्मनिष्ठो भव त्वम् ॥ २॥

श्लोकं भगवतो वक्त्रान्महर्षेरिममुद्गतम् ।
श्रुत्यन्तसारं यो वेद संशयो नास्य जातुचित् ॥ ३॥

अत्र श्लोके भगवता पूर्वार्धे स्थानमीरितम् ।
शारीरकस्य हृश्येऽस्मिञ्छरीरे पाञ्चभौतिके ॥ ४॥

तत्रैव लक्षणं चोक्तं द्वैतमीशा च वारितम् ।
उक्तं चाप्यपरोक्षत्वं नानालिङ्गनिबर्हणम् ॥ ५॥

उपदेशो द्वितीयार्धे शिष्याभ्यासकृते कृतः ।
त्रेधा भिन्नेन मार्गेण तत्त्वादैक्यं समीयुषा ॥ ६॥

उपायो मार्गणाभिख्यः प्रथमः सम्प्रकीर्तितः ।
द्वितीयो मज्जनाभिख्यः प्राणरोधस्तृतीयकः ॥ ७ ॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे मार्गत्रयकथनं नाम द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः

### मुख्यकर्तव्यनिरूपणम्

दैवरातस्य संवादमाचार्यरमणस्य च ।
निबध्नीमस्तृतीयेऽस्मिन्नध्याये विदुषां मुदे ॥ १ ॥

**दैवरात उवाच**

किं कर्तव्यं मनुष्यस्य प्रधानमिह संसृतौ ।
एकं निर्धार्य भगवांस्तन्मे व्याख्यातुमर्हति ॥ २ ॥

**भगवानुवाच**

स्वस्य स्वरूपं विज्ञेयं प्रधानं महदिच्छता ।
प्रतिष्ठा यत्र सर्वेषां फलानामुत कर्मणाम् ॥ ३ ॥

**दैवरात उवाच**

स्वस्य स्वरूपविज्ञाने साधनं किं समासतः ।
सिध्येत्केन प्रयत्नेन प्रत्यग्दृष्टिर्महीयसी ॥ ४ ॥

**भगवानुवाच**

विषयेभ्यः परावृत्य वृत्तीः सर्वाः प्रयत्नतः ।

विमर्शे केवलं तिष्ठेदचले निरुपाधिके ॥ ५॥

स्वस्य स्वरूपविज्ञाने साधनं तत्समासतः ।
सिध्येत्तेनैव यत्नेन प्रत्यग्दृष्टिर्महीयसी ॥ ६॥

दैवरात उवाच

यावत्सिद्धिर्भवेन्नॄणां योगस्य मुनिकुञ्जर ।
तावन्तं नियमाः कालं किं यत्नमुपकुर्वते ॥ ७॥

भगवानुवाच

प्रयत्नमुपकुर्वन्ति नियमा युञ्जतां सताम् ।
सिद्धानां कृतकृत्यानां गलन्ति नियमास्स्वयम् ॥ ८॥

दैवरात उवाच

केवलेन विमर्शेन स्थिरेण निरुपाधिना ।
यथा सिद्धिस्तथा मन्त्रैर्जप्तैः सिद्धिर्भवेन्न वा ॥ ९॥

भगवानुवाच

अचञ्चलेन मनसा मन्त्रैर्जप्तैर्निरन्तरम् ।
सिद्धिः स्याच्छ्रद्दधानानां जप्तेन प्रणवेन वा ॥ १०॥

वृत्तिर्जपेन मन्त्राणां शुद्धस्य प्रणवस्य वा ।
विषयेभ्यः परावृत्ता स्वस्वरूपात्मिका भवेत् ॥ ११ ॥

ईशपुत्रशके शैलभूमिनन्दधरामिते ।
सप्तमे सप्तमे सोऽयं संवादोऽभवदद्भुतः ॥ १२ ॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे मुख्यकर्तव्यनिरूपणं नाम तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः

### ज्ञानस्वरूपकथनम्

**प्रथमः प्रश्नः**

अहं ब्रह्मास्मीति वृत्तिः किं ज्ञानं मुनिकुञ्जर ।
उत ब्रह्माहमिति धीर्धीरहं सर्वमित्युत ॥ १॥

अथवा सकलं चैतद्ब्रह्मेति ज्ञानमुच्यते ।
अस्माद्वृत्तिचतुष्काद्वा किं नु ज्ञानं विलक्षणम् ॥ २॥

### अस्योत्तरम्

इमं मम गुरुः प्रश्नमन्तेवासिन आदरात् ।
आकर्ण्य रमणो वाक्यमुवाच भगवान्मुनिः ॥ ३॥

वृत्तयो भावना एव सर्वा एता न संशयः ।
स्वरूपावस्थितिं शुद्धां ज्ञानमाहुर्मनीषिणः ॥ ४॥

गुरोर्वचस्तदाकर्ण्य संशयच्छेदकारकम् ।
अपृच्छं पुनरेवाहमन्यं संशयमुद्गतम् ॥ ५॥

**द्वितीयः प्रश्नः**

वृत्तिव्याप्यं भवेद्ब्रह्म न वा नाथ तपस्विनाम् ।
इमं मे हृदि सञ्जातं संशयं छेत्तुमर्हसि ॥ ६॥

तमिमं प्रश्नमाकर्ण्य मित्रमङ्घ्रिजुषामृषिः ।
अभिषिच्य कटाक्षेण मामिदं वाक्यमब्रवीत् ॥ ७॥

**अस्योत्तरम्**

स्वात्मभूतं यदि ब्रह्म ज्ञातुं वृत्तिः प्रवर्तते ।
स्वात्माकारा तदा भूत्वा न पृथक् प्रतितिष्ठति ॥ ८॥

अयं प्रागुक्त एवाब्दे सप्तमे त्वेकविंशके ।
अभवन्नौ मितग्रन्थः संवादो रोमहर्षणः ॥ ९॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे ज्ञानस्वरूपकथनं नाम चतुर्थोऽध्यायः॥

## पञ्चमोऽध्यायः

### हृदयविद्या

प्रागुक्तेऽब्देऽष्टमे मासि नवमे दिवसे निशि ।
उपन्यसितवान् सम्यगुद्दिश्य हृदयं मुनिः ॥ १॥

निर्गच्छन्ति यतः सर्वा वृत्तयो देहधारिणाम् ।
हृदयं तत्समाख्यातं भावनाऽऽकृतिवर्णनम् ॥ २॥

अहंवृत्तिः समस्तानां वृत्तीनां मूलमुच्यते ।
निर्गच्छति यतोऽहंधीर्हृदयं तत्समासतः ॥ ३॥

हृदयस्य यदि स्थानं भवेच्चक्रमनाहतम् ।
मूलाधारं समारभ्य योगस्योपक्रमः कुतः ॥ ४॥

अन्यदेव ततो रक्तपिण्डाद्धृदयमुच्यते ।
अयं हृदिति वृत्त्या तदात्मनो रूपमीरितम् ॥ ५॥

तस्य दक्षिणतो धाम हृत्पीठे नैव वामतः ।
तस्मात्प्रवहति ज्योतिः सहस्रारं सुषुम्नया ॥ ६॥

सर्वं देहं सहस्रारात्तदा लोकानुभूतयः ।
ताः प्रपश्यन् विभेदेन संसारी मनुजो भवेत् ॥ ७॥

आत्मस्थस्य सहस्रारं शुद्धं ज्योतिर्मयं भवेत् ।
तत्र जीवेन्न सङ्कल्पो यदि सान्निध्यतः पतेत् ॥ ८॥

विज्ञायमानविषयं सन्निकर्षेण यद्यपि ।
न भवेद्योगभङ्गाय भेदस्याग्रहणे मनः ॥ ९॥

गृह्णतोऽपि स्थिरैकाधीः सहजा स्थितिरुच्यते ।
निर्विकल्पः समाधिस्तु विषयासन्निधौ भवेत् ॥ १०॥

अण्डं वपुषि निःशेषं निःशेषं हृदये वपुः ।
तस्मादण्डस्य सर्वस्य हृदयं रूपसङ्ग्रहः ॥ ११॥

भुवनं मनसो नान्यदन्यन्न हृदयान्मनः ।
अशेषा हृदये तस्मात्कथा परिसमाप्यते ॥ १२॥

कीर्त्यते हृदयं पिण्डे यथाण्डे भानुमण्डलम् ।
मनः सहस्रारगतं बिम्बं चान्द्रमसं यथा ॥ १३॥

यथा ददाति तपनस्तेजः कैरवबन्धवे ।
इदं वितरति ज्योतिर्हृदयं मनसे तथा ॥ १४॥

हृद्यसन्निहितो मर्त्यो मनः केवलमीक्षते ।
असन्निकर्षे सूर्यस्य रात्रौ चन्द्रे यथा महः ॥ १५॥

अपश्यंस्तेजसो मूलं स्वरूपं सत्यमात्मनः ।
मनसा च पृथक्पश्यन् भावान् भ्राम्यति पामरः ॥ १६॥

हृदि सन्निहितो ज्ञानी लीनं हृदयतेजसि ।
ईक्षते मानसं तेजो दिवा भानाविवैन्दवम् ॥ १७॥

प्रज्ञानस्य प्रवेत्तारो वाच्यमर्थं मनो विदुः ।
अर्थं तु लक्ष्यं हृदयं हृदयान्नापरः परः ॥ १८॥

दृग्दृश्यभेदधीरेषा मनसि प्रतितिष्ठति ।
हृदये वर्तमानानां दृग्दृश्येनैकतां व्रजेत् ॥ १९॥

मूर्च्छा निद्रातिसन्तोषशोकावेशभयादिभिः ।
निमित्तैराहता वृत्तिः स्वस्थानं हृदयं व्रजेत् ॥ २०॥

तदा न ज्ञायते प्राप्तिर्हृदयस्य शरीरिणा ।
विज्ञायते समाधौ तु नामभेदो निमित्ततः ॥ २१॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे हृदयविद्या नाम पञ्चमोऽध्यायः ॥

## षष्ठोऽध्यायः

### मनोनिग्रहोपायः

निरूप्य हृदयस्यैवं तत्त्वं तत्त्वविदां वरः ।
मनसो निग्रहोपायमवदद्रमणो मुनिः ॥ १ ॥

नित्यवृत्तिमतां नृणां विषयासक्तचेतसाम् ।
वासनानां बलीयस्त्वान्मनो दुर्निग्रहं भवेत् ॥ २ ॥

चपलं तन्निगृह्णीयात्प्राणरोधेन मानवः ।
पाशबद्धो यथा जन्तुस्तथा चेतो न चेष्टते ॥ ३ ॥

प्राणरोधेन वृत्तीनां निरोधः साधितो भवेत् ।
वृत्तिरोधेन वृत्तीनां जन्मस्थाने स्थितो भवेत् ॥ ४ ॥

प्राणरोधश्च मनसा प्राणस्य प्रत्यवेक्षणम् ।
कुम्भकं सिध्यति ह्येयं सततप्रत्यवेक्षणात् ॥ ५ ॥

येषां नैतेन विधिना शक्तिः कुम्भकसाधने ।
हठयोगविधानेन तेषां कुम्भकमिष्यते ॥ ६ ॥

एकदा रेचकं कुर्यात्कुर्यात्पूरकमेकदा ।
कुम्भकं तु चतुर्वारं नाडीशुद्धिर्भवेत्ततः ॥ ७ ॥

प्राणो नाडीषु शुद्धासु निरुद्धः क्रमशो भवेत् ।
प्राणस्य सर्वधा रोधः शुद्धं कुम्भकमुच्यते ॥ ८ ॥

त्यागं देहात्मभावस्य रेचकं ज्ञानिनः परे ।
पूरकं मार्गणं स्वस्य कुम्भकं सहजस्थितिम् ॥ ९ ॥

जपेन वाऽथ मन्त्राणां मनसो निग्रहो भवेत् ।
मानसेन तदा मन्त्रप्राणयोरेकता भवेत् ॥ १० ॥

मन्त्राक्षराणां प्राणेन सायुज्यं ध्यानमुच्यते ।
सहजस्थितये ध्यानं दृढभूमिः प्रकल्पते ॥ ११ ॥

सहवासेन महतां सतामारूढचेतसाम् ।
क्रियमाणेन वा नित्यं स्थाने लीनं मनो भवेत् ॥ १२ ॥

॥ इति श्रीरमणागीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे मनोनिग्रहोपायो नाम षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः

### आत्मविचाराधिकारितदङ्गनिरूपणम्

भारद्वाजस्य वै कार्ष्णेराचार्यरमणस्य च ।
अध्याये कथ्यते श्रेष्ठः संवाद इह सप्तमे ॥ १॥

**कार्ष्णिरुवाच**

रूपमात्मविचारस्य किं नु किं वा प्रयोजनम् ।
लभ्यादात्मविचारेण फलं भूयोऽन्यतोऽस्ति वा ॥ २॥

**भगवानुवाच**

सर्वासामपि वृत्तीनां समष्टिर्या समीरिता ।
अहंवृत्तेरमुष्यास्तु जन्मस्थानं विमृश्यताम् ॥ ३॥

एष आत्मविचारः स्यान्न शास्त्रपरिशीलनम् ।
अहङ्कारो विलीनः स्यान्मूलस्थानगवेषणे ॥ ४॥

आत्माभासस्त्वहङ्कारः स यदा सम्प्रलीयते ।
आत्मा सत्योऽभितः पूर्णः केवलः परिशिष्यते ॥ ५॥

सर्वक्लेशनिवृत्तिः स्यात्फलमात्मविचारतः ।
फलानामवधिः सोऽयमस्ति नेतोऽधिकं फलम् ॥ ६॥

अद्भुताः सिद्धयः साध्या उपायान्तरतश्च याः ।
ताः प्राप्तोऽपि भवत्यन्ते विचारेणैव निर्वृतः ॥ ७ ॥

कार्ष्णिरुवाच

एतस्यात्मविचारस्य प्राहुः कमधिकारिणम् ।
अधिकारस्य सम्पत्तिः किं ज्ञातुं शक्यते स्वयम् ॥ ८ ॥

भगवानुवाच

उपासनादिभिः शुद्धं प्राग्जन्मसुकृतेन वा ।
दृष्टदोषं मनो यस्य शरीरे विषयेषु च ॥ ९ ॥

मनसा चरतो यस्य विषयेष्वरुचिर्भृशम् ।
देहे चानित्यता बुद्धिस्तं प्राहुरधिकारिणम् ॥ १० ॥

देहे नश्वरताबुद्धेर्वैराग्याद्विषयेषु च ।
एताभ्यामेव लिङ्गाभ्यां ज्ञेया स्वस्याधिकारिता ॥ ११ ॥

कार्ष्णिरुवाच

स्नानं सन्ध्यां जपो होमः स्वाध्यायो देवपूजनम् ।
सङ्कीर्तनं तीर्थयात्रा यज्ञो दानं व्रतानि च ॥ १२ ॥

विचारे साधिकारस्य वैराग्याच्च विवेकतः ।
किं वा प्रयोजनाय स्युरुत कालविधूतये ॥ १३ ॥

भगवानुवाच

आरम्भिणां क्षीयमाणरागाणामधिकारिणाम् ।
कर्माण्येतानि सर्वाणि भूयस्यै चितशुद्धये ॥ १४ ॥

यत्कर्म सुकृतं प्रोक्तं मनोवाक्कायसम्भवम् ।
तत्तु कर्मान्तरं हन्ति मनोवाक्कायसम्भवम् ॥ १५ ॥

अत्यन्तशुद्धमनसां पक्वानामधिकारिणाम् ।
इदं लोकोपकाराय कर्मजालं भविष्यति ॥ १६ ॥

परेषामुपदेशाय क्षेमाय च मनीषिणः ।
पक्वाश्च कर्म कुर्वन्ति भयान्नादेशशास्त्रतः ॥ १७ ॥

विचारप्रतिकूलानि न पुण्यानि नरर्षभ ।
क्रियमाणान्यसङ्गेन भेदबुद्ध्युपमर्दिना ॥ १८ ॥

न चाकृतानि पापाय पक्वस्यात्मविमर्शिनः ।
स्वविमर्शो महत्पुण्यं पावनानां हि पावनम् ॥ १९ ॥

दृश्यते द्विविधा निष्ठा पक्वानामधिकारिणाम् ।
त्याग एकान्तयोगाय परार्थं च क्रियादरः ॥ २० ॥

कार्ष्णिरुवाच

निर्वाणायास्ति चेदन्यो मार्ग आत्मविचारतः ।
एको वा विविधस्तं मे भगवान्वक्तुमर्हति ॥ २१॥

भगवानुवाच

एकः प्राप्तुं प्रयतते परः प्राप्तारमृच्छति ।
चिराय प्रथमो गच्छन् प्राप्नोत्यात्मानमन्ततः ॥ २२॥

एकस्य ध्यानतश्चित्तमेकाकृतिर्भविष्यति ।
एकाकृतित्वं चित्तस्य स्वरूपे स्थितये भवेत् ॥ २३॥

अनिच्छयाप्यतो ध्यायन् विन्दत्यात्मनि संस्थितिम् ।
विचारकस्तु विज्ञाय भवेदात्मनि संस्थितः ॥ २४॥

ध्यायतो देवतां मन्त्रमन्यद्वा लक्ष्यमुत्तमम् ।
ध्येयमात्ममहाज्योतिष्यन्ततो लीनतां व्रजेत् ॥ २५॥

गतिरेवं द्वयोरेका ध्यातुश्चात्मविमर्शिनः ।
ध्यायन्नेकः प्रशान्तः स्यादन्यो विज्ञाय शाम्यति ॥ २६॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे आत्मविचाराधिकारितदङ्गनिगरूपणं नाम सप्तमोऽध्यायः ॥

## अष्टमोऽध्यायः

### आश्रमविचारः

कार्ष्णेरिवापरं प्रश्नं निशम्य भगवान्मुनिः ।
चातुराश्रम्यसम्बद्धमधिकारं न्यरूपयत् ॥ १ ॥

ब्रह्मचारी गृही वाऽपि वानप्रस्थोऽथवा यतिः ।
नारी वा वृषलो वापि पक्वो ब्रह्म विचारयेत् ॥ २ ॥

सोपानवत्परं प्राप्तुं भविष्यत्याश्रमक्रमः ।
अत्यन्तपक्वचित्तस्य क्रमापेक्षा न विद्यते ॥ ३ ॥

गतये लोककार्याणामादिशन्त्याश्रमक्रमम् ।
आश्रमत्रयधर्माणां न ज्ञानप्रतिकूलता ॥ ४ ॥

सन्न्यासो निर्मलं ज्ञानं न काषायो न मुण्डनम् ।
प्रतिबन्धकबाहुल्यवारणायाश्रमो मतः ॥ ५ ॥

ब्रह्मचर्याश्रमे यस्य शक्तिरुज्जृम्भते व्रतैः ।
विद्यया ज्ञानवृद्ध्या च स पश्चात्प्रज्वलिष्यति ॥ ६ ॥

ब्रह्मचर्येण शुद्धेन गृहित्वे निर्मलो भवेत् ।
सर्वेषामुपकाराय गृहस्थाश्रम उच्यते ॥ ७ ॥

## त्रयोदशोऽध्यायः

### सन्न्यासे स्त्रीपुरुषयोस्तुल्याधिकारनिरूपणम्

अत्रीणामन्वयज्योत्स्ना वसिष्ठानां कुलस्नुषा ।
महादेवस्य जननी धीरस्य ब्रह्मवेदिनः॥ १॥

प्रतिमानं पुरन्ध्रीणां लोकसेवाव्रते स्थिता ।
बिभ्राणा महतीं विद्यां ब्रह्मादिविबुधस्तुताम् ॥ २॥

दक्षिणे विन्ध्यतश्शक्तेस्तारिण्या आदिमा गुरुः।
तपस्सखी मे दयिता विशालाक्षी यशस्विनी ॥ ३॥

पश्नद्वयेन रमणाह्वयं विश्वहितं मुनिम् ।
अभ्यगच्छददुष्टाङ्गी निक्षिप्तेन मुखे मम ॥ ४॥

आत्मस्थितानां नारीणामस्ति चेत्प्रतिबन्धकम् ।
गृहत्यागेन हंसीत्वं किमु स्याच्छास्त्रसम्मतम् ॥ ५॥

जीवन्त्या एव मुक्ताया देहपातो भवेद्यदि ।
दहनं वा समाधिर्वा कार्यं युक्तमनन्तरम् ॥ ६॥

प्रश्नद्वयमिदं श्रुत्वा भगवानृषिसत्तमः।
अवोचन्निर्णयं तत्र सर्वशास्त्रार्थतत्त्ववित् ॥ ७॥

स्वरूपे वर्तमानानां पक्वानां योषितामपि ।
निवृत्तत्वान्निषेधस्य हंसीत्वं नैव दुष्यति ॥ ८॥

मुक्तत्वस्याविशिष्टत्वाद्बोधस्य च वधूरपि ।
जीवन्मुक्ता न दाह्या स्यात् तद्देहो हि सुरालयः॥ ९॥

ये दोषा देहदहने पुंसो मुक्तस्य संस्मृताः।
मुक्तायास्सन्ति ते सर्वे देहदाहे च योषितः॥ १०॥

एकविंशेऽह्नि गीतोऽभूदयमर्थो मनीषिणा ।
अधिकृत्य ज्ञानवतीं रमणेन महर्षिणा ॥ ११॥

॥ इति श्रीरमणागीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे सन्न्यासे स्त्रीपुरुषयोस्तुल्याधिकारनिरूपणं नाम त्रयोदशोऽध्यायः ॥

## चतुर्दशोऽध्यायः

### जीवन्मुक्तिविचारः

निशायामेकविंशेऽह्नि भारद्वाजो विदां वरः ।
प्राज्ञश्शिवकुलोपाधिर्वैदर्भो वदतां वरः॥ १॥

जीवन्मुक्तिं समुद्दिश्य महर्षिं परिपृष्टवान् ।
अथ सर्वेषु श्रृण्वत्सु महर्षिर्वाक्यमब्रवीत् ॥ २॥

शास्त्रीयैर्लौकिकैश्चापि प्रत्ययैरविचालिता ।
स्वरूपे सुदृढा निष्ठा जीवन्मुक्तिरुदाहृता ॥ ३॥

मुक्तिरेकविधैव स्यात्प्रज्ञानस्याविशेषतः।
शरीरस्थं मुक्तबन्धं जीवन्मुक्तं प्रचक्षते ॥ ४॥

ब्रह्मलोकगतो मुक्तश्श्रूयते निगमेषु यः ।
अनुभूतौ न भेदोऽस्ति जीवन्मुक्तस्य तस्य च ॥ ५॥

प्राणाः समवलीयन्ते यस्यात्रैव महात्मनः ।
तस्याप्यनुभवो विद्वन्नेतयोरुभयोरिव ॥ ६॥

साम्यात्स्वरूपनिष्ठाया बन्धहानेश्च साम्यतः।
मुक्तिरेकविधैव स्याद्भेदस्तु परबुद्धिगः ॥ ७॥

मुक्तो भवति जीवन्यो महात्मात्मनि संस्थितः।
प्राणाः समवलीयन्ते तस्यैवात्र नरर्षभ ॥ ८ ॥

जीवन्मुक्तस्य कालेन तपसः परिपाकतः।
स्पर्शाभावोऽपि सिद्धः स्याद्रूपे सत्यपि कुत्रचित् ॥ ९ ॥

भूयश्च परिपाकेन रूपाभावोऽपि सिद्ध्यति ।
केवलं चिन्मयो भूत्वा स सिद्धो विहरिष्यति ॥ १० ॥

शरीरसंश्रयं सिद्ध्योर्द्वयमेतन्नरोत्तम।
अल्पेनापि च कालेन देवतानुग्रहाद्भवेत् ॥ ११ ॥

भेदमेतं पुरस्कृत्य तारतम्यं न सम्पदि ।
देहवानशरीरो वा मुक्त आत्मनि संस्थितः ॥ १२ ॥

नाडीद्वारार्चिराद्येन मार्गेणोर्ध्वगतिर्नरः ।
तत्रोत्पन्नेन बोधेन सद्यो मुक्तो भविष्यति ॥ १३ ॥

उपासकस्य सुतरां पक्वचित्तस्य योगिनः ।
ईश्वरानुग्रहात्प्रोक्ता नाडीद्वारोत्तमा गतिः ॥ १४ ॥

सर्वेषु कामचारोऽस्य लोकेषु परिकीर्तितः ।
इच्छयाऽनेकदेहानां ग्रहणं चाप्यनुग्रहः ॥ १५ ॥

कैलासं केऽपि मुक्तानां लोकमाहुर्मनीषिणः ।
एके वदन्ति वैकुण्ठं परे त्वादित्यमण्डलम् ॥ १६॥

मुक्तलोकाश्च ते सर्वे विद्वन्भूम्यादिलोकवत् ।
चित्रवैभवया शक्त्या स्वरूपे परिकल्पिताः ॥ १७॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे जीवन्मुक्तिविचारो नाम चतुर्दशोऽध्यायः॥

## पञ्चदशोऽध्यायः

### श्रवणमनननिदिध्यासननिरूपणम्

श्रवणं नाम किं नाथ मननं नाम किं मतम् ।
किं वा मुनिकुलश्रेष्ठ निदिध्यासनमुच्यते ॥ १॥

इत्येवं भगवान्पृष्टो मया ब्रह्मविदां वरः
द्वाविंशे दिवसे प्रातरब्रवीच्छिष्यसंसदि ॥ २॥

वेदशीर्षस्थवाक्यानामर्थव्याख्यानपूर्वकम् ।
आचार्याच्छ्रवणं केचिच्छ्रवणं परिचक्षते ॥ ३॥

अपरे श्रवणं प्राहुराचार्याद्विदितात्मनः ।
गिरां भाषामयीनां च स्वरूपं बोधयन्ति याः ॥ ४॥

श्रुत्वा वेदान्तवाक्यानि निजवाक्यानि वा गुरोः ।
जन्मान्तरीयपुण्येन ज्ञात्वा वोभयमन्तरा ॥ ५॥

अहंप्रत्ययमूलं त्वं शरीरादेर्विलक्षणः ।
इतीदं श्रवणं चित्ताच्छ्रवणं वस्तुतो भवेत् ॥ ६॥

वदन्ति मननं केचिच्छास्त्रार्थस्य विचारणम् ।
वस्तुतो मननं तात स्वरूपस्य विचारणम् ॥ ७॥

विपर्यासेन रहितं संशयेन च मानद ।
कैश्चिद्ब्रह्मात्मविज्ञानं निदिध्यासनमुच्यते ॥ ८॥

विपर्यासेन रहितं संशयेन च यद्यपि ।
शास्त्रीयमैक्यविज्ञानं केवलं नानुभूतये ॥ ९॥

संशयश्च विपर्यासो निवार्येते उभावपि ।
अनुभूत्यैव वासिष्ठ न शास्त्रशतकैरपि ॥ १०॥

शास्त्रं श्रद्धावतो हन्यात् संशयं च विपर्ययम् ।
श्रद्धायाः किञ्चिदूनत्वे पुनरभ्युदयस्तयोः ॥ ११॥

मूलच्छेदस्तु वासिष्ठ स्वरूपानुभवे तयोः ।
स्वरूपे संस्थितिस्तस्मान्निदिध्यासनमुच्यते ॥ १२॥

बहिस्सञ्चरतस्तात स्वरूपे संस्थितिं विना ।
अपरोक्षो भवेद्बोधो न शास्त्रशतचर्चया ॥ १३॥

स्वरूपसंस्थितिः स्याच्चेत् सहजा कुण्डिनर्षभ।
सा मुक्तिः सा परा निष्ठा स साक्षात्कार ईरितः ॥ १४॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे श्रवणमनननिदिध्यासन निरूपणं नाम पञ्चदशोऽध्यायः ॥

## षोडशोऽध्यायः

### भक्तिविचारः

अथ भक्तिं समुद्दिश्य पृष्टः पुरुषसत्तमः ।
अभाषत महाभागो भगवान् रमणो मुनिः ॥ १॥

आत्मा प्रियः समस्तस्य प्रियं नेतरदात्मनः ।
अच्छिन्ना तैलधारावत् प्रीतिर्भक्तिरुदाहृता ॥ २॥

अभिन्नं स्वात्मनः प्रीत्या विजानातीश्वरं कविः ।
जानन्नप्यपरो भिन्नं लीन आत्मनि तिष्ठति ॥ ३॥

वहन्ती तैलधारावद्या प्रीतिः परमेश्वरे ।
अनिच्छतोऽपि सा बुद्धिं स्वरूपं नयति ध्रुवम् ॥ ४॥

परिच्छिन्नं यदात्मानं स्वल्पज्ञं चापि मन्यते ।
भक्तो विषयिरूपेण तदा क्लेशनिवृत्तये ॥ ५॥

व्यापकं परमं वस्तु भजते देवताधिया ।
भजंश्च देवताबुद्ध्या तदेवान्ते समश्नुते ॥ ६॥

देवताया नरश्रेष्ठ नामरूपप्रकल्पनात् ।
ताभ्यां तु नामरूपाभ्यां नामरूपे विजेष्यते ॥ ७॥

भक्तौ तु परिपूर्णायामलं श्रवणमेकदा ।
ज्ञानाय परिपूर्णाय तदा भक्तिः प्रकल्पते ॥ ८॥

धाराव्यपेता या भक्तिः सा विच्छिन्नेति कीर्त्यते ।
भक्तेः परस्य सा हेतुर्भवतीति विनिर्णयः ॥ ९॥

कामाय भक्तिं कुर्वाणः कामं प्राप्याप्यनिर्वृतः ।
शाश्वताय सुखस्यान्ते भजते पुनरीश्वरम् ॥ १०॥

भक्तिः कामसमेताऽपि कामासौ न निवर्तते ।
श्रद्धा वृद्धा परे पुंसि भूय एवाभिवर्धते ॥ ११॥

वर्धमाना च सा भक्तिः काले पूर्णा भविष्यति ।
पूर्णया परया भक्त्या ज्ञानेनेव भवं तरेत् ॥ १२॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे भक्तिविचारो नाम षोडशोऽध्यायः ॥

## सप्तदशोऽध्यायः

### ज्ञानप्राप्तिविचारः

पञ्चविंशे तु दिवसे वैदर्भो विदुषां वरः ।
प्रश्रयावनतो भूत्वा मुनिं भूयोऽपि पृष्टवान् ॥ १॥

वैदर्भ उवाच

क्रमेणायाति किं ज्ञानं किञ्चित्किञ्चिद्दिने दिने ।
एकस्मिन्नेव काले किं पूर्णमाभाति भानुवत् ॥ २॥

भगवानुवाच

क्रमेणायाति न ज्ञानं किञ्चित्किञ्चिद्दिने दिने ।
अभ्यासपरिपाकेन भासते पूर्णमेकदा ॥ ३॥

वैदर्भ उवाच

अभ्यासकाले भगवन् वृत्तिरन्तर्बहिस्तथा ।
यातायातं प्रकुर्वाणा याते किं ज्ञानमुच्यते ॥ ४॥

भगवानुवाच

अन्तर्याता मतिर्विद्वन्बहिरायाति चेत्पुनः ।
अभ्यासमेव तामाहुर्ज्ञानं ह्यनुभवोऽच्युतः ॥ ५॥

वैदर्भ उवाच

ज्ञानस्य मुनिशार्दूल भूमिकाः काश्चिदीरिताः ।
शास्त्रेषु विदुषां श्रेष्ठैः कथं तासां समन्वयः ॥ ६॥

भगवानुवाच

शास्त्रोक्ता भूमिकास्सर्वा भवन्ति परबुद्धिगाः ।
मुक्तिभेदा इव प्राज्ञ ज्ञानमेकं प्रजानताम् ॥ ७॥

चर्यां देहेन्द्रियादीनां वीक्ष्यारब्धानुसारिणीम् ।
कल्पयन्ति परे भूमीस्तारतम्यं न वस्तुतः ॥ ८॥

वैदर्भ उवाच

प्रज्ञानमेकदा सिद्धं सर्वाज्ञाननिबर्हणम् ।
तिरोधत्ते किमज्ञानात्सङ्गादङ्कुरितात्पुनः ॥ ९॥

भगवानुवाच

अज्ञानस्य प्रतिद्वन्द्वि न पराभूयते पुनः ।
प्रज्ञानमेकदा सिद्धं भरद्वाजकुलोद्वह ॥ १०॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे ज्ञानप्राप्तिविचारो नाम सप्तदशोऽध्यायः॥

## अष्टादशोऽध्यायः

### सिद्धमहिमानुकीर्तनम्

वरपराशरगोत्रसमुद्भवं वसुमतीसुरसङ्घयशस्करम् ।
विमलसुन्दरपण्डितनन्दनं कमलपत्रविशालविलोचनम् ॥ १॥

अरुणशैलगताश्रमवासिनं परमहंसमनञ्जनमच्युतम् ।
करुणया दधतं व्यवहारितां सततमात्मनि संस्थितमक्षरे ॥ २॥

अखिलसंशयवारणभाषणं भ्रममदद्विरदाङ्कुशवीक्षणम् ।
अविरतं परसौख्यधृतोद्यमं निजतनूविषयेष्वलसालसम् ॥ ३॥

परिणताम्रफलप्रभविग्रहं चलतरेन्द्रियनिग्रहसग्रहम् ।
अमृतचिद्घनवल्लिपरिग्रहं मितवचोरचितागमसङ्ग्रहम् ॥ ४॥

अमलदीप्ततरात्ममरीचिभिर्निजकरैरिव पङ्कजबान्धवम् ।
पदजुषां जडभावमनेहसा परिहरन्तमनन्तगुणाकरम् ॥ ५॥

मृदुतमं वचने दृशि शीतलं विकसितं वदने सरसीरुहे ।
मनसि शून्यमहश्शशिसन्निभे हृदि लसन्तमनन्त इवारुणम् ॥ ६॥

अदयमात्मतनौ कठिनं व्रते परुषचित्तमलं विषयव्रजे ।
ऋषिमरोषमपेतमनोरथं धृतमदं घनचिल्लहरीवशात् ॥ ७॥

विगतमोहमलोभममभावनं शमितमत्सरमुत्सविनं सदा ।
भवमहोदधितारणकर्मणि प्रतिफलेन विनैव सदोद्यतम् ॥ ८॥

माता ममेति नगराजसुतोरुपीठं
नागानने भजति याहि पिता ममेति ।
अङ्कं हरस्य समवाप्य शिरस्यनेन
सञ्चुम्बितस्य गिरिरन्ध्रकृतो विभूतिम् ॥ ९॥

वेदादिपाकदमनोज्ञतरकच्छपेशै-
र्युक्तैर्धराधरसुषुप्त्यमरेश्वरैश्च ।
सूक्ष्मामृतायुगमृतेन सह प्रणत्या
सम्पन्नशब्दपटलस्य रहस्यमर्थम् ॥ १०॥

दण्डं विनैव यतिनं बत दण्डपाणिं
दुःखाब्धितारकमरिं बत तारकस्य।
त्यक्त्वा भवं भवमहो सततं भजन्तं
हंसं तथापि गतमानससङ्गरागम् ॥ ११॥

धीरत्वसम्पदि सुवर्णगिरेरनूनं
वारांनिधेरधिकमेव गभीरतायाम् ।
क्षान्तौ जयन्तमचलामखिलस्य धात्रीं
दान्तौ निदर्शनमशान्तिकथादविष्ठम् ॥ १२॥

नीलारविन्दसुहृदा सदृशं प्रसादे
तुल्यं तथा महसि तोयजबान्धवेन ।

ब्राह्म्यां स्थितौ तु पितरं वटमूलवासं
संस्मारयन्तमचलन्तमनूदितं मे ॥ १३ ॥

यस्याधुनापि रमणी रमणीयभावा
गीर्वाणलोकपृतना शुभवृत्तिरूपा ।
संशोभते शिरसि नापि मनोजगन्ध-
स्तत्तादृशं गृहिणमप्यधिपं यतीनाम् ॥ १४ ॥

वन्दारुलोकवरदं नरदन्तिनोऽपि
मन्त्रेश्वरस्य महतो गुरुतां वहन्तम् ।
मन्दारवृक्षमिव सर्वजनस्य पाद-
च्छायां श्रितस्य परितापमपाहरन्तम् ॥ १५ ॥

यस्तन्त्रवार्तिकमनेकविचित्रयुक्ति-
संशोभितं निगमजीवनमाततान ।
भुस्य तस्य बुधसंहतिसंस्तुतस्य
वेषान्तरं तु निगमान्तवचो विचारि ॥ १६ ॥

वेदशीर्षचयसारसङ्ग्रहं पञ्चरत्नमरुणाचलस्य यः ।
गुसमल्पमपि सर्वतोमुखं सूत्रभूतमतनोदिमं गुरुम् ॥ १७ ॥

देववाचि सुतरामशिक्षितं काव्यगन्धरहितं च यद्यपि ।
ग्रन्थकर्मणि तथाऽपि संस्फुरद्भाषितानुचरभावसञ्चयम् ॥ १८ ॥

लोकमातृकुचदुग्धपायिनश्शङ्करस्तवकृतो महाकवेः ।
द्राविडद्विजशिशोर्नटद्गिरो भूमिकान्तरमपारमेधसम् ॥ १९ ॥

भूतले त्विह तृतीयमुद्भवं क्रौञ्चभूमिधररन्ध्रकारिणः ।
ब्रह्मनिष्ठितदशाप्रदर्शनाद्युक्तिवादतिमिरस्य शान्तये ॥ २० ॥

कुम्भयोनिमुखमौनिपूजिते द्राविडे वचसि विश्रुतं कविम् ।
दृष्टवन्तमजरं परं महः केवलं धिषणया गुरुं विना ॥ २१ ॥

बालकेऽपि जडगोपकेऽपि वा वानरेऽपि शुनि वा खलेऽपि वा ।
पण्डितेऽपि पदसंश्रितेऽपि वा पक्षपातरहितं समेक्षणम् ॥ २२ ॥

शक्तिमन्तमपि शान्तिसंयुतं भक्तिमन्तमपि भेदवर्जितम् ।
वीतरागमपि लोकवत्सलं देवतांशमपि नम्रचेष्टितम् ॥ २३ ॥

एष यामि पितुरन्तिकं ममान्वेषणं तु न विधीयतामिति ।
संविलिख्य गृहतो विनिर्गतं शोणशैलचरणं समागतम् ॥ २४ ॥

ईदृशं गुणगणैरभिरामं प्रश्रयेण रमणं भगवन्तम् ।
सिद्धलोकमहिमानमपारं पृष्टवानमृतनाथयतीन्द्रः ॥ २५ ॥

आह तं स भगवानगवासी सिद्धलोकमहिमा तु दुरूहः ।
ते शिवेन सदृशाः शिवरूपाः शक्नुवन्ति च वराण्यपि दातुम् ॥ २६ ॥

॥ इति श्रीरमणगीतासु ब्रह्मविद्यायां योगशास्त्रे रमणान्तेवासिनो वासिष्ठस्य गणपतेरुपनिबन्धे सिद्धमहिमानुकीर्तनं नाम अष्टादशो ऽध्यायः ॥

॥ इति श्रीरमणगीता समाप्ता ॥

**अत्रेमे भवन्त्युपसंहारश्लोकाः**

द्वितीये तु द्वितीयोऽत्र श्लोको ग्रन्थे स्वयं मुनेः ।
द्वितीयाध्यायगाः श्लोका अन्येमेतं विवृण्वते ॥ १॥

इतरत्र तु सर्वत्र प्रश्नार्थः प्रश्नकारिणः ।
उत्तरार्थो भगवतः श्लोकबन्धो मम स्वयम् ॥ २॥

अयं गणपतेर्ग्रन्थमालायामुज्ज्वलो मणिः ।
गुरोः सरस्वती यत्र विशुद्धे प्रतिबिम्बिता ॥ ३॥

# सद्दर्शनम्

श्रीभगवद्रमणमहर्षि-विरचित-द्राविडग्रन्थस्य
संस्कृतानुवादात्मकम्

## मङ्गलम्

सत्प्रत्ययाः किं नु विहाय सन्तं
हृद्येष चिन्तारहितो हृदाख्यः ।
कथं स्मरामस्तममेयमेकं
तस्य स्मृतिस्तत्र दृढैव निष्ठा ॥ १ ॥

मृत्युञ्जयं मृत्युभियाश्रिताना-
महंमतिर्मृत्युमुपैति पूर्वम् ।
अथ स्वभावादमृतेषु तेषु
कथं पुनर्मृत्युधियोऽवकाशः ॥ २ ॥

## ग्रन्थारम्भः

सर्वैर्निदानं जगतोऽहमश्च
वाच्यः प्रभुः कश्चिदपारशक्तिः ।
चित्रेऽत्र लोक्यं च विलोकिता च
पटः प्रकाशोऽप्यभवत्स एकः ॥ ३ ॥

आरभ्यते जीवजगत्परात्म-
तत्त्वाभिधानेन मतं समस्तम् ।
इदं त्रयं यावदहंमति स्यात्
सर्वोत्तमाऽहंमतिशून्यनिष्ठा ॥ ४॥

सत्यं मृषा वा चिदिदं जडं वा
दुःखं सुखं वेति मुधा विवादः ।
अदृष्टलोका निरहंप्रतीति-
र्निष्ठाऽविकल्पा परमाऽखिलेष्टा ॥ ५॥

सरूपबुद्धिर्जगतीश्वरे च
सरूपधीरात्मनि यावदस्ति ।
अरूपकात्मा यदि कः प्रपश्येत्
सा दृष्टिरेकाऽनवधिर्हि पूर्णा ॥ ६॥

यत्पञ्चकोशात्मकमस्ति देहं
तदन्तरा किं भुवनं चकास्ति ।
देहं विना पञ्चविधं तदेतत्
पश्यन्ति के वा भुवनं भणन्तु ॥ ७॥

शब्दादिरूपं भुवनं समस्तं
शब्दादिसत्तेन्द्रियवृत्तिभास्या ।
सत्तेन्द्रियाणां मनसो वशे स्यात्
मनोमयं तद्भुवनं वदामः ॥ ८॥

धिया सहोदेति धियास्तमेति
लोकस्ततो धीप्रविभास्य एषः ।
धीलोकजन्मक्षयधाम पूर्णं
सद्वस्तु जन्मक्षयशून्यमेकम् ॥ ९॥

भवन्तु सद्दर्शनसाधनानि
परस्य नामाकृतिभिः सपर्या ।
सद्वस्तुनि प्राप्ततदात्मभावा
निष्ठैव सद्दर्शनमित्यवेहि ॥ १०॥

द्वन्द्वानि सर्वाण्यखिलास्त्रिपुट्यः
किञ्चित्समाश्रित्य विभान्ति वस्तु ।
तन्मार्गणे स्याद्गलितं समस्तं
न पश्यतां सच्चलनं कदापि ॥ ११॥

विद्या कथं भाति न चेदविद्या
विद्यां विना किं प्रविभात्यविद्या ।
द्वयं च कस्येति विचार्य मूल-
स्वरूपनिष्ठा परमार्थविद्या ॥ १२॥

बोद्धारमात्मानमजानतो यो
बोधः स किं स्यात्परमार्थबोधः ।
बोधस्य बोध्यस्य च संश्रयं स्वं
विजानतस्तद्द्वितयं विनश्येत् ॥ १३॥

निद्रा न विद्या ग्रहणं न विद्या
गृह्णाति किञ्चिन्न यथार्थबोधे ।
निद्रापदार्थग्रहणेतरा स्यात्
चिदेव विद्या विलसन्त्यशून्या ॥ १४ ॥

सत्यश्चिदात्मा विविधाकृतिश्चित्
सिध्येत्पृथक्सत्यचितो न भिन्ना ।
भूषाविकाराः किमु सन्ति सत्यं
विना सुवर्णं पृथगत्र लोके ॥ १५ ॥

तद्युष्मदोरस्मदि सम्प्रतिष्ठा
तस्मिन् विनष्टेऽस्मदि मूलबोधात् ।
तद्युष्मदस्मन्मतिवर्जितैका
स्थितिर्ज्वलन्ती सहजात्मनः स्यात् ॥ १६ ॥

भूतं भविष्यच्च भवत्स्वकाले
तद्वर्तमानस्य विहाय तत्त्वम् ।
हास्या न किं स्याद्गतभाविचर्चा
विनैकसङ्ख्यां गणनेव लोके ॥ १७ ॥

क्व भाति दिक्कालकथा विनाऽस्मान्
दिक्काललीलेह वपुर्वयं चेत् ।
न क्वापि भामो न कदापि भामो
वयं तु सर्वत्र सदा च भामः ॥ १८ ॥

देहात्मभावे ज्ञजडौ समाना-
वेकस्य देहे हृदि दीप्त आत्मा ।
आक्रम्य देहं च जगच्च पूर्णः
परस्य मेयं तनुमात्रमात्मा ॥ १९॥

अज्ञस्य विज्ञस्य च विश्वमस्ति
पूर्वस्य दृश्यं जगदेव सत्यम् ।
परस्य दृश्याश्रयभूतमेकं
सत्यं प्रपूर्णं प्रविभात्यरूपम् ॥ २०॥

विधेः प्रयत्नस्य च कोऽपि वाद-
स्तयोर्द्वयोर्मूलमजानतां स्यात् ।
विधेः प्रयत्नस्य च मूलवस्तु
सञ्जानतां नैव विधिर्न यत्नः ॥ २१॥

यदीशितुर्वीक्षणमीक्षितार-
मवीक्ष्य तन्मानसिकेक्षणं स्यात् ।
न द्रष्टुरन्यः परमो हि तस्य
वीक्षा स्वमूले प्रविलीय निष्ठा ॥ २२॥

आत्मानमीक्षेत परं प्रपश्ये-
दित्यागमोक्तेः सुलभो न भावः ।
नात्मैव दृश्यो यदि का कथेशे
स्वयं तदन्नीभवनं तदीक्षा ॥ २३॥

धिये प्रकाशं परमो वितीर्य
स्वयं धियोऽन्तः प्रविभाति गुप्तः ।
धियं परावर्त्य धियोन्तरेऽत्र
संयोजनान्नेश्वरदृष्टिरन्या ॥ २४ ॥

न वक्ति देहोऽहमिति प्रसुप्तौ
न कोऽपि नाभूवमिति प्रवक्ति ।
यत्रोदिते सर्वमुदेति तस्य
धियाऽहमः शोधय जन्मदेशम् ॥ २५॥

देहो न जानाति सतो न जन्म
देहप्रमाणोऽन्य उदेति मध्ये ।
अहङ्कृतिग्रन्थिविबन्धसूक्ष्म-
शरीरचेतोभवजीवनामा ॥ २६ ॥

रूपोद्भवो रूपततिप्रतिष्ठो
रूपाशनो धूतगृहीतरूपः ।
स्वयं विरूपः स्वविचारकाले
धावत्यहङ्कारपिशाच एषः ॥ २७ ॥

भावेऽहमः सर्वमिदं विभाति
लयेऽहमो नैव विभाति किञ्चित् ।
तस्मादहंरूपमिदं समस्तं
तन्मार्गणं सर्वजयाय मार्गः ॥ २८ ॥

सत्या स्थितिर्नाहमुदेति यत्र
तच्चोदयस्थानगवेषणेन ।
विना न नश्येद्यदि तन्न नश्येत्
स्वात्मैक्यरूपा कथमस्तु निष्ठा ॥ २९॥

कूपे यथा गाढजले तथान्त-
र्निमज्ज्य बुद्ध्या शितया नितान्तम् ।
प्राणं च वाचं च नियम्य चिन्वन्
विन्देन्निजाहङ्कृतिमूलरूपम् ॥ ३०॥

मौनेन मज्जन्मनसा स्वमूल-
चर्चैव सत्यात्मविचारणं स्यात् ।
एषोऽहमेतन्न मम स्वरूप-
मिति प्रमा सत्यविचारणाङ्गम् ॥ ३१॥

गवेषणात्प्राप्य हृदन्तरं तत्
पतेदहन्ता परिभुग्नशीर्षा ।
अथाहमन्यत्स्फुरति प्रकृष्टं
नाहङ्कृतिस्तत्परमेव पूर्णम् ॥ ३२॥

अहङ्कृतिं यो लसति ग्रसित्वा
किं तस्य कार्यं परिशिष्टमस्ति ।
किञ्चिद्विजानाति स नात्मनोऽन्यत्
तस्य स्थितिं भावयितुं क्षमः कः ॥ ३३॥

आह स्फुटं तत्त्वमसीति वेद-
स्तथाप्यसम्प्राप्य परात्मनिष्ठाम् ।
भूयो विचारो मतिदुर्बलत्वं
तत्सर्वदा स्वात्मतया हि भाति ॥ ३४॥

न वेद्म्यहं मामुत वेद्म्यहं मा-
मिति प्रवादो मनुजस्य हास्यः ।
दृग्दृश्यभेदात् किमयं द्विधात्मा
स्वात्मैकतायां हि धियां न भेदाः ॥ ३५॥

हृत्प्राप्य सद्धाम निजस्वरूपे
स्वभावसिद्धेऽनुपलभ्य निष्ठाम् ।
मायाविलासः सदसत्सरूप-
विरूपनानैकमुखप्रवादाः ॥ ३६॥

सिद्धस्य वित्तिः सत एव सिद्धिः
स्वप्नोपमानाः खलु सिद्धयोऽन्याः ।
स्वप्नः प्रबुद्धस्य कथं नु सत्यः
सति स्थितः किं पुनरेति मायाम् ॥ ३७॥

सोऽहंविचारो वपुरात्मभावे
साहाय्यकारी परमार्गणस्य ।
स्वात्मैक्यसिद्धौ स पुनर्निरर्थो
यथा नरत्वप्रमितिर्नरस्य ॥ ३८॥

द्वैतं विचारे परमार्थबोधे
त्वद्वैतमित्येष न साधुवादः ।
गवेषणात्प्राग्दशमे विनष्टे
पश्चाच्च लब्धे दशमत्वमेकम् ॥ ३९॥

करोमि कर्मेति नरो विजानन्
बाध्यो भवेत्कर्मफलं च भोक्तुम् ।
विचारधूता हृदि कर्तृता चेत्
कर्मत्रयं नश्यति सैव मुक्तिः ॥ ४०॥

बद्धत्वभावे सति मोक्षचिन्ता
बन्धस्तु कस्येति विचारणेन ।
सिद्धे स्वयं स्वात्मनि नित्यमुक्ते
क्व बन्धचिन्ता क्व च मोक्षचिन्ता ॥ ४१॥

रूपिण्यरूपिण्युभयात्मिका च
मुक्तिस्त्रिरूपेति विदो वदन्ति ।
इदं त्रयं या विविनक्त्यहन्धी-
स्तस्याः प्रणाशः परमार्थमुक्तिः ॥ ४२ ॥

सद्दर्शनं द्राविडवाङ्निबद्धं
महर्षिणा श्रीरमणेन शुद्धम् ।
प्रबन्धमुत्कृष्टममर्त्यवाण्या-
मनूद्य वासिष्ठमुनिर्व्यतानीत् ॥ ४३ ॥

सत्तत्त्वसारं सरलं दधाना
मुमुक्षुलोकाय मुदं ददाना ।
अमानुषश्रीरमणीयवाणी-
मयूखभित्तिर्मुनिवाग् विभाति ॥ ४४॥

॥ सद्दर्शनं समाप्तम् ॥

# विश्वमीमांसा

(१)

## प्रथमः परिच्छेदः

### १. सदधिकरणम्

रमणस्य गुरोः प्राप्य कटाक्षं ज्योतिरद्भुतम् ।
कुर्मो विश्वस्य मीमांसां यथा बुद्धं यथा श्रुतम् ॥ १॥

पदार्थान् कपिलः प्राह विंशतिं चतुरुत्तराम् ।
षडेव कणभुङ् मौनी चतुरो भगवान् फणी ॥ २॥

विश्वमेतत्सदेवैकमिति श्रुत्यन्तभाषितम् ।
विश्वस्मिन्नितरे भावाः सत एव विभूतयः ॥ ३॥

कारणं सदुपादानं कार्यं विश्वं प्रकीर्तितम् ।
सतो विश्वस्य चाद्वैतं मृत्तिकाघटयोरिव ॥ ४॥

द्रव्यं केवलमीक्षस्व परित्यज्य गुणान् धिया ।
समस्तेऽपि तदा द्रव्ये किं विभाति विना दिवम् ॥ ५॥

श्रुतिश्चाह समस्तं चाप्योतप्रोतं जगद्दिवि ।
दिवस्तस्याः सदद्वैतमुत्तरत्र निरूप्यते ॥ ६॥

विज्ञाने भाति ये भान्ति भावाः शब्दादयो गुणाः ।
न किञ्चिदनुभूयन्ते विज्ञानोपरमे तु ते ॥ ७॥

एवं स्वतः प्रकाशत्वं गुणानां नैव दृश्यते ।
सिद्धिश्च परतो न स्यात् सम्बन्धं कञ्चिदन्तरा ॥ ८॥

दृश्यते विषयाकारा प्रत्यक्षे स्मरणे च धीः ।
प्रज्ञाविषयतादात्म्यमेवं साक्षात्प्रदृश्यते ॥ ९॥

नचेत्समष्टिविज्ञानविभूतिर्गुणसञ्चयः ।
विषयव्यष्टिविज्ञानतादात्म्यं नोपपद्यते ॥ १०॥

यथाऽस्मदादिविज्ञाने ध्येयं बुद्धिरिति द्वयम् ।
पूर्णे समष्टिविज्ञाने विकृतिः प्रकृतिस्तथा ॥ ११॥

परिणामो यथा स्वप्नः सूक्ष्मस्य स्थूलरूपतः ।
जाग्रत्प्रपञ्चस्त्वस्माकं तथेश्वरमहाचितः ॥ १२॥

विकृतिः सर्वभूतानि प्रकृतिर्देवता परा ।
सतः पादस्तयोराद्या त्रिपादी प्रकृतिर्भवेत् ॥ १३॥

कबलीकृत्य सङ्कल्पानेकाऽपि स्याद्यथामतिः ।
भूतानि कबलीकृत्य देवताऽपि तथा परा ॥ १४॥

भूतानामात्मनः सर्गे संहृतौ च तथाऽऽत्मनि ।
प्रभवेद्देवता श्रेष्ठा सङ्कल्पानां यथा मतिः ॥ १५॥

सदाश्रयं गुणघनं भूतं नानाविधं विदुः ।
सत एव विकारांशं सलिलस्येव बुद्बुदम् ॥ १६॥

व्यापारो न पृथग्वस्तु वस्तुनश्चलनं हि तत् ।
सत्तातः का परा जातिः विशेषो गुणवैभवम् ॥ १७॥

वस्तुत्वं समवायस्य न सम्बन्धत्वमात्रतः ।
अभावस्य तु भावत्वं को निरूपयितुं क्षमः ॥ १८॥

गुणादेर्धर्मभूतत्वात् अस्तु नाम पदार्थता ।
सत्प्रतिद्वन्दिवस्तुत्वं पार्थक्येन न सिध्यति ॥ १९॥

वस्तु शक्ति श्च विश्वस्य निमित्तं प्रकृतिश्च तत् ।
ज्ञानं धर्मि च धर्मश्च भावत्वात्सदुदीर्यते ॥ २०॥

## २. मायाधिकरणम्

मायाऽम्बा प्रकृतिः शक्तिः कालो दिङ् महिमा महः ।
प्राणश्च धर्मभूतायाः संविदो नामसङ्ग्रहः ॥ २१॥

वैचित्र्यादुच्यते माया विश्वगर्भतयाऽम्बिका ।
विश्वस्योपादानतया प्रकृतिः परिकीर्तिता ॥ २२॥

शक्तिः सर्वसमर्थत्वात् कालोऽस्य पचनाद्भवेत् ।
दिक् समस्ताश्रयत्वेन महिमा व्यापकत्वतः ॥ २३॥

स्वप्रकाशतया तेजः प्राणो विश्वस्य चालनात् ।
अनन्या ब्रह्मणः सेयमन्या तु व्यवहारतः ॥ २४॥

अन्तरं वस्तुनो ज्ञातृ तच्छक्तं व्यवहारतः ।
शाखाः समन्ततो ज्ञानं सा शक्तिर्व्यवहारतः ॥ २५॥

प्रचक्षते चिदात्मत्वं ज्ञातुर्ज्ञानस्य चोभयोः ।
मण्डलस्य च रश्मीनां ज्योतिराकृतितां यथा ॥ २६॥

चित एकपदार्थत्वात् चित् चिता न विशिष्यते ।
तस्मात् गुणत्वं ज्ञानस्य शङ्करेण निराकृतम् ॥ २७॥

ज्ञातुर्ज्ञानं स्वरूपं स्यात् न गुणो नापि च क्रिया ।
यदि स्वस्य स्वरूपेण वैशिष्ट्यमनवस्थितिः ॥ २८॥

वाचैव शक्यते कर्तुं विभागः स्वस्वरूपयोः ।
नानुभूत्या ततो द्वैतं सच्छक्त्योर्व्यावहारिकम् ॥ २९॥

विज्ञानस्य गुणत्वं यत् विज्ञातुर्द्रव्यता च या ।
धर्मत्वादपि धर्मित्वात् व्यवहारे तु भक्तितः ॥ ३० ॥

अन्तरावर्तभूयस्त्वात् एकस्मिन् बोधसागरे ।
बोद्धारो बहवोऽभूवन् वस्तु नैव तु भिद्यते ॥ ३१ ॥

## अथ द्वितीयः परिच्छेदः

### १. द्विविधाकाशाधिकारणम्

आकाशं द्विविधं प्रोक्तं पूर्वं शुद्धमुदीर्यते ।
अन्यद्रजं समाख्यातं आधाराधेयता तयोः ॥ १ ॥

प्रोक्तं शुद्धं यदाकाशं तच्छक्तेर्नातिरिच्यते ।
आकाशब्रह्मणोस्तस्मादभेद उपपद्यते ॥ २ ॥

अन्यद्रजो यदाकाशं समाख्यातं तदाश्रितम् ।
स सर्वभूतबीजानां शक्तेरुद्गार इष्यते ॥ ३ ॥

न सर्वभूतबीजानि वस्तूनि स्युः पृथक् पृथक् ।
सति प्रागविभक्तानि बभूवुरिति शुश्रुम ॥ ४ ॥

यथा स्यात् स्मृतिबीजानां प्रज्ञायामविशेषतः ।
तथा स्यात् भूतबीजानां अविभक्तस्थितिः सति ॥ ५ ॥

नाणूनि भूतबीजानि प्राक् सर्गात्सति संस्थितौ ।
चितिशक्त्यात्मकान्येव निराकाराणि सर्वधा ॥ ६ ॥

शुद्धाकाशप्रकृतिकं तदाकाशं रजोमयम् ।
स एव प्रथमः सर्गः परमस्यात्मनो मतः ॥ ७ ॥

नामधेयमसामान्यं द्यौः शुद्धस्य विहायसः ।
रजोमयस्यान्तरिक्षं नामा सामान्यमिष्यते ॥ ८ ॥

अन्यानि गगनव्योमपुष्करप्रभृतीनि तु ।
साधारणान्यपि प्रायः प्रयुज्यन्ते द्वितीयखे ॥ ९ ॥

## २. मातरिश्वाधिकरणम्

अन्तरिक्षे तु विषये विज्ञानं दीप्यदात्मनः ।
एकाग्रत्वात्प्रवृद्धोष्मगभीरस्वरतां गतम् ॥ १० ॥

द्विधैवं धर्मभूतस्य ज्ञानस्य विकृतिं विना ।
शुद्धत्वे च स्वरत्वे च विभिन्नेव दशाऽभवत् ॥ ११ ॥

एतत्कर्मार इव समधमत् ब्रह्मणस्पतिः ।
इति यद्भाषितं मन्त्रे स्वरस्य धमनं तु तत् ॥ १२ ॥

एष स्वरात्मकः प्राणो मातरिश्वाऽभिधीयते ।
धमनापरपर्यायात् श्वसनात् व्योममातरि ॥ १३ ॥

स्वराविर्भावदेशत्वात् व्योम्नस्तन्मातृतोच्यते ।
भाक्ता भाषा चमत्कारो विज्ञेयः स तु केवलम् ॥ १४॥

श्वसनान्मातरिश्वेव स रुद्रो रोदितीत्यतः ।
इन्द्रश्च गीतो वेदेऽयं परमैश्वर्ययोगतः ॥ १५॥

शुद्धा चिदेव स्त्रीनामा स्वरस्तु पुरुषाह्वयः ।
भण्यते मन्त्रभाषायां सैका शक्तिस्तु वस्तुतः ॥ १६॥

अव्यक्तात् स्वरतो भिन्नो व्यक्तः शब्दस्तु भौतिकः ।
दिवो विवर्तः पूर्वः स्यात् व्यक्तसङ्घर्षजः परः ॥ १७॥

एवं भेदेऽप्यभेदोऽस्ति शब्दयोरुभयोस्तयोः ।
पूर्वः समुद्रवद्बोध्यः परो बोध्यस्तरङ्गवत् ॥ १८॥

या च विद्युदियं दृश्या स्पृश्यो यश्चैष मारुतः ।
तावुभावन्यसंयोगात् शक्तेरन्यौ तरङ्गकौ ॥ १९॥

व्यक्तवर्णमयः शब्दो यद्यपि ब्रह्मणस्पतिः ।
तथापि तत्पदं भक्त्या प्रकृतौ मान्त्रवर्णिकम् ॥ २०॥

### ३. तेजोऽबन्नाधिकरणम्

अखण्डस्वररूपस्य प्राणस्य धमनात्पुनः ।
अम्बरादखिलं व्यक्तमसतः सदजायत ॥ २१॥

॥

सर्वकारणभावत्वात् यथा ब्रह्म सदीरितम् ।
विकारभूतभावत्वात् तथा विश्वं सदुच्यते ॥ २२॥

अव्यक्तत्वेन विश्वस्मात् आत्मनश्च जडत्वतः ।
विभक्तमिव मध्यस्थं दृष्ट्यामसदिवाम्बरम् ॥ २३॥

भूतत्रयस्याप्यव्यक्तबीजराशेर्विहायसः ।
तस्यासत्वं लक्षणया व्याख्येयं मान्त्रवर्णिकम् ॥ २४॥

अम्बरे भवता नित्यं शक्तिपाकेन भूयसा ।
तेजोऽबन्नानि जायन्ते त्रीणि व्यक्तानि तु क्रमात् ॥ २५॥

तेजःसलिलभूमीनां व्यक्तत्वाद्भूततेष्यते ।
शुद्धाकाशस्य वायोश्च भूतसंज्ञौपचारिकी ॥ २६॥

व्यक्ताः पृथक् प्रभाष्यन्ते तेजःसलिलभूमयः ।
अव्यक्ता अम्बराभिख्याः तस्मान्न पृथगम्बरम् ॥ २७॥

त्रिवृत्करणसिद्धान्तः सम्मतः श्रुतिसूत्रयोः ।
पञ्चीकरणसिद्धान्तो नव्यानामेव धीमताम् ॥ २८॥

तेजसो रोहितं रूपं अपां शुक्लमुदीरितम् ।
कृष्णमन्नस्य रूपं तु त्रिवृत्सु त्रिकसङ्करः ॥ २९॥

रक्तशुक्लासिता योक्ता प्रकृतिः शिरसि श्रुतेः ।
सामीषां त्रिवृतां योनिः तेजोऽबन्नात्मिकामता ॥ ३० ॥

४. ब्रह्माण्डाधिकरणम्

भूतरूपतया खांशः पाकात्परिणतो यथा ।
त्रिवृन्ति समपद्यन्त तथा भूतानि पाकतः ॥ ३१ ॥

एतान्याद्यानि रूपाणि भूतानां त्रिवृतां विदुः ।
प्रत्यण्डं भासमानानि मण्डलानि विवस्वताम् ॥ ३२ ॥

अनन्तराणि रूपाणि मण्डलानि भुवां विदुः ।
अन्ते सिद्धानि रूपाणि मण्डलान्यमृतत्विषाम् ॥ ३३ ॥

कुटुम्बभूतान् सूर्यस्य ग्रहानेव भुवो विदुः ।
इयं च पृथिवी योनिरस्माकं कश्चन ग्रहः ॥ ३४ ॥

प्रत्यण्डमपि भासन्ते यथा भुवनबान्धवाः ।
तान्निघ्नास्तान् परीवृत्य भासन्ते भूमयस्तथा ॥ ३५ ॥

एतं चन्द्रमसं प्राहुः भूम्यायत्तमुपग्रहम् ।
चन्द्राः परोक्षा अन्येऽपि ग्रहनिघ्ना उपग्रहाः ॥ ३६ ॥

ग्रहराजैर्ग्रहैरेवं तथा पूर्णमुपग्रहैः ।
एकांशेनापि गगनं नैवानन्तमपूर्यत ॥ ३७ ॥

विनाशश्च पुराणानां नवानामपि सम्भवः ।
अण्डानामत्र गगने स्यातां पर्यायतः किल ॥ ३८ ॥

## ५. सप्तलोकाधिकरणम्

परमात्मा सत्यलोकः शुद्धाकाशस्तपो जगत् ।
अन्तरिक्षं जनो लोको महो लोको दिवाकरः ॥ ३९ ॥

भोगस्थानं पुण्यवतां स्वर्लोकस्तुहिनद्युतिः ।
व्यक्तवायुतरङ्गाणां भुवर्लोको गतिस्थली ॥ ४० ॥

भूलोको गीयते भूमिः एषु लोकेषु सप्तसु ।
भूरादयो व्याहृतयः सप्त स्युरिति शुश्रुम ॥ ४१ ॥

उभयोरात्मशक्त्योः स्यात् लोकाख्या त्वौपचारिकी ।
पञ्चस्वन्येषु लोकेषु सन्ति पञ्चविधाः प्रजाः ॥ ४२ ॥

कीर्त्यन्ते मरुतः प्राज्ञैर्जनो लोकनिवासिनः ।
नामान्तरैस्ते प्रमथा रुद्राः सिद्धा गणा अपि ॥ ४३ ॥

आदित्यसाध्यनामानो महोलोकप्रजाः स्मृताः ।
गन्धर्वाः पितरश्चेति स्वर्लोके द्विविधाः प्रजाः ॥ ४४ ॥

भुवर्लोके पिशाचाः स्युः भूलोके तु नरः स्मृताः ।
स्वर्लोकादिजुषो देवा वसवश्चेति कीर्तिताः ॥ ४५ ॥

## अथ तृतीयः परिच्छेदः

### १. मध्यमाधिकरणम्

याऽन्तरिक्षेऽभिनिष्पन्ना परमस्य पुमाकृतिः ।
प्रथमा तां प्रभाषन्ते मध्यमां देवतां विदः ॥ १॥

महेश्वरं विदुः शैवाः तं महेन्द्रं तु वैदिकाः ।
तद्रूपमन्यत्प्रागुक्तं इदं स्यादाधिदैविकम् ॥ २॥

महेश्वर्यथवेन्द्राणी तत्पत्नी वनिताकृतिः ।
सूक्ष्मतेजा.शतः पूर्वः शक्तेरन्या रसांशतः ॥ ३॥

### २. हिरण्यगर्भाधिकरणम्

सकलं मण्डलं भानोः प्रविवेश परः पुनः ।
तदस्य करणं जज्ञे निखिलाण्डानुभूतये ॥ ४॥

रोमकूपे रोमकूपे यथा नृणां त्वगिन्द्रियम् ।
हृदयं लोकनाथस्य मण्डले मण्डले तथा ॥ ५॥

द्वैतदृष्ट्या तु जीवानां भेदा हृदयभेदतः ।
ऐक्यानुभूतेर्नाध्यक्षभेदो मण्डलभेदतः ॥ ६॥

एकत्वानुभवादेव मध्यमान्मण्डलान्तरः ।
हिरण्यगर्भ इन्द्रात्तु विभक्तोऽपि न भिद्यते ॥ ७॥

मण्डलान्तरसामान्यं सूर्यनाम प्रकीर्तितम् ।
हिरण्यगर्भनाम स्यात् अन्तरस्यैव केवलम् ॥ ८॥

यत्सूर्य आत्मा जगतः तस्थुषश्चेति दर्शनम् ।
द्विधाऽपि तत्समन्वेति बाह्याभ्यन्तरवैभवात् ॥ ९॥

मण्डलस्यान्तरं केचित् विष्णुनाम्ना प्रचक्षते ।
उत्तमाभिख्यया केचित् उद्गीथाभिख्यया परे ॥ १०॥

## ३. सप्ताश्वाधिकरणम्

ये भास्करस्य सप्ताश्वाः पुराणेषु प्रकीर्तिताः ।
सप्तभ्यः किरणेभ्यस्ते भिद्यन्ते नैव तत्त्वतः ॥ ११॥

तुरङ्गः सप्तनामैकः शुक्लो रश्मिरुदाहृतः ।
सप्तानामपि रश्मीनां समष्टिर्हि सितो घृणिः ॥ १२॥

सप्तादित्यास्तु ये गीताः तेऽमी सप्त मरीचयः ।
मार्तण्डो योऽष्टमो गीतः स शुक्लो रश्मिरिष्यते ॥ १३॥

मार्तण्डस्य च मित्रस्य न भेदः कोऽपि विद्यते ।
भासः स्वस्थतया मित्रो मध्यमस्थान उच्यते ॥ १४॥

## ४. मित्रावरुणाधिकरणम्

किरणानां प्रतिद्वन्दी वरुणस्तिमिरात्मकः ।
मित्रोऽह्न इव रात्रेस्तु देवता परिकीर्त्यते ॥ १५॥

तेजः समस्तं विसृजत्यादत्ते सकलं तमः ।
तस्मात्पायुश्च रसनं तावध्यात्ममुदाहृतौ ॥ १६॥

मित्रेणानुगृहीतः स्यात् बोधो जाग्रद्दशाश्रयः ।
बोधो निद्रा समाध्योस्तु वरुणेनानुगृह्यते ॥ १७॥

मित्रः सर्वाणि भूतानि सह लोकेन पश्यति ।
यत्र निद्रान्ति भूतानि वरुणस्तत्र पश्यति ॥ १८॥

अखण्डं वारुणं ज्ञानं विभक्तं मैत्रमुच्यते ।
अन्यादृशं नान्धकारो तमस्तु वरुणात्मकम् ॥ १९॥

## ५. अर्यमाधिकरणम्

चान्द्रं मण्डलमाविष्टः सौरः स्याद्रश्मिरर्यमा ।
प्राणिनां स्वप्नजं ज्ञानं अर्यम्णात्वनुगृह्यते ॥ २०॥

यत्स्वप्नश्चन्द्रिकाऽभावे यज्जाग्रद्धीर्निशागमे ।
दविष्ठचन्द्रिकाघस्रसद्भावादेव तद्द्वयम् ॥ २१॥

### ६. नासत्याधिकरणम्

तुहिनातपयोगेन शीतोष्णौ भवतो गुणौ ।
नासत्यौ परिकीर्त्येते देवौ जगति ताविमौ ॥ २२॥

शीतस्योष्णं भेषजं स्यात् शीतमुष्णस्य भेषजम् ।
कथितौ देवभिषजौ तस्मादेतौ विचक्षणैः ॥ २३॥

तुहिनातपहेतुत्वात् चन्द्रसूर्यौ परे विदुः ।
नासत्यौ तत्त्वतः केचित् रजनीदिवसौ विदः ॥ २४॥

### ७. कालाधिकरणम्

विज्ञानमेव कालाख्यं वस्तुतो यदि चिन्त्यते ।
भूतं भवद्भावि चैतत् सर्गे त्रेधा व्यभज्यत ॥ २५॥

अहस्तेजस्तमो रात्रिः भक्तितस्तत्र कालता ।
मासादेः कालनामत्वं अपि भाक्तं विचिन्त्यताम् ॥ २६॥

यच्च दिव्यं युगं प्रोक्तं यच्चोक्तं मानवं युगम् ।
द्वादशाब्दसहस्रात्मतत्तन्मानवशाद्बुधैः ॥ २७॥

विभागस्तु चतुर्धाऽस्य नैव कालविशेषतः ।
शक्त्यशक्तिकृतः पूर्वो धर्माधर्मकृतः परः ॥ २८॥

भूतपाको वियत्यासीत् ब्रह्मदृष्ट्यूष्मणो यथा ।
पाकमण्डेषु पश्यामः तथा सप्तहयोष्मणः ॥ २९॥

एष सप्तहयस्योष्मा ब्रह्मशक्त्यनिलोष्मणः ।
नान्यो यन्मातरिश्वैव पक्षपुच्छं विना रविः ॥ ३०॥

सोऽयं भूतभवद्भाविरूपो भुवनपाचकः ।
कालः शक्तेर्दशाभेदः त्वष्टा शास्त्रे प्रगीयते ॥ ३१॥

## ८. वैश्वानराधिकरणम्

नराणामिह विश्वेषां भासाङ्गुष्ठप्रमाणकः ।
हृदयान्तरवर्त्यात्मा वैश्वानर उदाहृतः ॥ ३२॥

स्थानं वैश्वानरस्याहुः केचिन्नयनमण्डलम् ।
मनः केचिज्जागरिते स्वप्ने चैते प्रकीर्तिते ॥ ३३॥

वस्तुतो हृदयं स्थानं ततस्तेजोऽस्य निर्गतम् ।
स्थानान्तरगतं पश्येत् स्वप्नान् जाग्रति चाखिलम् ॥ ३४॥

यथा व्योम्नः परं तेजः सूर्यमण्डलमाविशत् ।
तथैव सूर्यादपि तत् विशां हृदयमण्डलम् ॥ ३५॥

सूत्रात्मा मध्यमः प्रोक्तो महानात्माऽर्कबिम्बगः ।
जीवात्मा हृदयस्थानः शुद्धात्मा परमः स्मृतः ॥ ३६॥

देहाभिमानी सर्वोऽपि जीवः पृथगिव स्थितः ।
आत्मानुभूतिमांत्सर्वः सतो जीवो न भिद्यते ॥ ३७॥

अन्तरं भगवद्बुद्ध्या मन्वानोऽभिन्नमात्मनः ।
य उपास्ते नरस्तस्मिन् भगवान् स प्रसीदति ॥ ३८॥

अन्तरे भगवद्बुद्धिः सत्यरूपा न संशयः ।
विभिन्नं मन्यते यत्तं आत्मनस्तत्पुनर्मृषा ॥ ३९॥

आत्मानमेव मन्वाना अन्तरं य उपासते ।
स इहैवात्मानुभूतिः स्यात् तेषामिति विदो विदुः ॥ ४०॥

### ९. हिरण्मयरूपाधिकरणम्

हिरण्मयं यदनघं वपुर्महत आत्मनः ।
तन्मध्यमस्य विज्ञेयं मण्डले प्रतिबिम्बितम् ॥ ४१॥

सूर्यरूपतयेन्द्रस्य स्तोत्रं तदुपपद्यते ।
शिवाय विष्णुरूपायेत्यादि सङ्गच्छते ततः ॥ ४२॥

तद्विशां नयनस्थाने पुनश्च प्रतिबिम्बितम् ।
तद्भिन्नमन्यवद्भाति हृदयान्तरवर्तिनः ॥ ४३॥

यद्रूपं प्रथमं दीप्ते मण्डले प्रतिबिम्बितम् ।
तदेव मण्डलद्वारा नयने प्रतिबिम्बितम् ॥ ४४॥

इन्द्रमेके परे सूर्यं तमाहुर्नयनाश्रयम् ।
उभयोरपि सम्बन्धः तस्य तुल्यो हि दृश्यते ॥ ४५॥

पार्थिवेषु शरीरेषु नराणां प्रतिबिम्बनात् ।
पार्थिवज्योतिषो नाम्ना तमग्निमपरे विदुः ॥ ४६॥

अन्तरस्त्वणिमा पूर्वो हृदये यः समीरितः ।
नयने बिम्बता सेयं हिरण्मयपुमा कृतिः ॥ ४७॥

छायामात्रं प्रभाषन्ते केचिदेतं तु चाक्षुषम् ।
पृथगन्तःकरणिनं परे प्राज्ञाः प्रचक्षते ॥ ४८॥

पृथगन्तःकरणिनं वासिष्ठो नानुमन्यते ।
निषेधाद्बोद्धुरन्यस्य सर्वधा श्रुतिमूर्धनि ॥ ४९॥

छायामात्रं पामराणां तदन्यप्रतिबिम्बवत् ।
अन्तर्द्विदलचक्रस्थं ऐशमन्यत्तु नेत्रगम् ॥ ५०॥

दृष्टात्मनां तु सिद्धानां प्रतिबिम्बः स ऐश्वरः ।
पश्यत्यखिलमाविष्टो हृदयान्तरतेजसा ॥ ५१॥

दिव्यं चक्षुस्तदेवाहुः उत्तमं रूपमैश्वरम् ।
स धन्यः पुरुषो लोके यस्तदाविश्य पश्यति ॥ ५२॥

## १०. देवतात्रयाधिकरणम्

चिद्विभूतिस्त्रिधा प्रोक्ता सत एवं परात्मनः ।
इन्द्रसूर्याग्निरूपेण शिष्टं तु गुणवैभवम् ॥ ५३॥

विद्युद्दृश्या रवेर्बिम्बं पार्थिवोऽग्निश्च तत्त्वतः ।
भौतिकान्येव वस्तूनि देवताख्यास्त्रयोऽन्तराः ॥ ५४॥

वैश्वानरस्य प्रतिमा पार्थिवोऽग्निरुदीरितः ।
मण्डलान्तर्गतस्याहुः मण्डलं प्रतिमां बुधाः ॥ ५५॥

दृश्योऽयं वैद्युतो वह्निः स्पृश्योऽयं च समीरणः ।
प्राणस्य महतः प्राज्ञैः प्रतिमे सहजे उभे ॥ ५६॥

अण्डपिण्डोपाधिकत्वात् प्रणवोपाधिकत्वतः ।
पूजनीया चिद्विभूतिः त्रिविधा परमात्मनः ॥ ५७॥

विदुर्महान्तमात्मानं अण्डोपाधिकमीश्वरम् ।
अग्निं वैश्वानरमिमं पिण्डोपाधिं प्रचक्षते ॥ ५८॥

भणन्ति प्रणवोपाधिं इन्द्रं विश्वोत्तरं बुधाः ।
वदन्ति परमात्मानं तमेव निरुपाधिकम् ॥ ५९॥

केचिद्भङ्ग्यन्तरेणाहुः त्रीनेतानेव पूरुषान् ।
हृत्सूर्यगगनस्थानान् विधिविष्णुमहेश्वरान् ॥ ६०॥

## अथ चतुर्थः परिच्छेदः

### १. इतरदेवताधिकरणम्

भौतिकानां तु वस्तूनां देवतात्वं यदुच्यते ।
कर्मणां वा गुणानां वा तत्परम्परया भवेत् ॥ १॥

### २. मतान्तरेण मूर्तित्रयाधिकरणम्

सूर्यं पृथ्वीं शशाङ्कं च प्राहुर्मूर्तित्रयं परे ।
सूर्यात् पृथ्वी ततश्चन्द्र इति सर्गक्रमो मतः ॥ २॥

विश्वरूपो रविर्विष्णुः सत्त्वोद्रिक्त उदाहृतः ।
रजोऽधिकस्त्वयं लोको नाभिजन्मा प्रकीर्त्यते ॥ ३॥

प्रेतलोकः शशाङ्कस्तु तामसो भूतनायकः ।
उदाहरन्ति यं जातं ब्रह्मणो भालदेशतः ॥ ४॥

एतं मूर्तित्रयं ज्ञेयं ब्रह्मविष्णुहराह्वयम् ।
महत्यो मूर्तयो लोकाः पिण्डान्यल्पा हि मूर्तयः ॥ ५॥

मूर्तित्रयान्तराज्ञेयाः प्रसिद्धाः पुरुषास्त्रयः ।
व्याहृतित्रितयं त्वेषां मते भूचन्द्रभानुषु ॥ ६॥

## ३. उभयलिङ्गाधिकरणम्

भोक्तृत्वमपि भोग्यत्वं लोकानां सम्प्रदृश्यते ।
भुनक्ति सूर्यः पृथिवीं भुज्यते शीतरश्मिना ॥ ७॥

भुनक्ति पृथिवी चन्द्रं तस्मादुभयलिङ्गता ।
त्रयाणामपि लोकानां तद्रहस्यं विदो विदुः ॥ ८॥

असौ विभाकरश्चण्डी पृथिवी कमला मता ।
सोमः सरस्वती देवी भोग्यत्वे व्यवहारतः ॥ ९॥

तन्त्रे सहोदरद्वन्द्वत्रितयं यदुदीरितम् ।
एकैकस्योभयात्मत्वं तत्र ज्ञेयं मनीषिभिः ॥ १०॥

स्त्रीरूपता यथा पुंसां स्त्रीणां पुंरूपता तथा ।
तन्त्रोदिता समन्वेति लिङ्गद्वितयसङ्गतेः ॥ ११॥

एवं त्रयाणां द्वैविध्यात् लोकानां षट्स्वरूपता ।
तन्त्रोदिता समन्वेति लिङ्गद्वितयसङ्गतेः ॥ १२॥

भोक्ता सूर्यो हरिर्नाम भुनक्ति पृथिवीं रमाम् ।
भोक्ता सोमो हरो नाम भुङ्क्ते चण्डीमिनात्मिकाम् ॥ १३॥

अयं लोको विधिर्नाम भोक्ता भुङ्क्ते सरस्वतीम् ।
धात्रीं पीयूषसरसां चन्द्रमण्डलरूपिणीम् ॥ १४॥

### ४. मतान्तरगौणत्वाधिकरणम्

त्रयाणामिह गोलानां भूभानुतुहिनत्विषाम् ।
गुणतः स्यादुभयथा त्रिमूर्तित्वप्रकल्पनम् ॥ १५॥

नित्यं चलनशीलास्ते यद्यपि प्राणिनस्त्रयः ।
पृथगन्तःकरणिनो न वेत्यत्र तु संशयः ॥ १६॥

### ५. तृतीयमते मूर्तित्रयाधिकरणम्

उद्गीथः पुरुषो भानौ प्रथमः पुरुषः क्षितौ ।
शशाङ्के प्रथमः प्रेतो महान्तस्तेषु वस्तुतः ॥ १७॥

तेषामपि त्रिमूर्तित्वकल्पना दृश्यते क्वचित् ।
विदुषां कल्पने तेषां नैकस्योभयलिङ्गता ॥ १८॥

न भिदा विष्णुविषये पक्षयोरादिमान्त्ययोः ।
तृतीये नियतैकत्र ब्रह्मसंज्ञाशरीरिणी ॥ १९॥

यथोद्गीथो भवत्यात्मा सूर्यमण्डलवासिनाम् ।
पितामहस्तथाऽऽत्मा स्यात् भूमिमण्डलवासिनाम् ॥ २०॥

तस्मान्न काचन भिदा पक्षयोरादिमान्त्ययोः ।
उक्तिभङ्गीभिदैवैका विषयेऽपि प्रजापतेः ॥ २१॥

आद्यपक्षे तृतीयस्य पक्षस्य तु हरो यमः ।
हरास्त्रयस्तृतीये तु रुद्रेश्वरसदाशिवाः ॥ २२॥

नायकः पितृलोकस्य नामतो रुद्र उच्यते ।
ईश्वरो व्योमलोकस्य परमात्मा सदाशिवः ॥ २३॥

## ६. चतुर्व्यूहाधिकरणम्

सदाशिवं केऽपि नाम्ना वासुदेवं प्रचक्षते ।
सङ्कर्षणं च प्रद्युम्नं पुरुषौ मध्यमोत्तमौ ॥ २४ ॥

पार्थिवस्यानिरुद्धाख्या मते तेषां विपश्चिताम् ।
आद्यपक्ष इवात्रापि नोल्लेखः पितृभूपतेः ॥ २५॥

# अथ पञ्चमः परिच्छेदः

## १. श्रेष्ठाधिकरणम्

श्रेष्ठं प्राणमविज्ञाय ज्ञायते नैव किञ्चन ।
आत्मनश्च शरीरस्य स मध्यस्थो विराजते ॥ १॥

शरीरमात्मनः श्रेष्ठः शरीरस्य तु सोऽन्तरः ।
अतिलङ्घ्य तमात्मानं कः प्रदर्शयितुं क्षमः ॥ २॥

जीवस्योपाधिरध्यात्मं प्राणोऽयं सर्वभूतभृत् ।
भागे भूतरसे पाकात् अणिष्ठोऽपामणुर्मितः ॥ ३॥

ईश्वरे धर्मभूतोऽयं शरीरे धर्मितामितः ।
अहमित्यभिमानेन यद्भात्यत्र विभिन्नवत् ॥ ४॥

सूक्ष्मस्थूलेऽस्य शाखे द्वे विद्युच्छक्तिसमीरवत् ।
तत्राद्या ज्ञानशक्तिः स्यात् क्रियाशक्तिरनन्तरा ॥ ५॥

ज्ञानेद्रियाणि प्रथमा विभूतिर्मनसा सह ।
कर्मेन्द्रियाणि त्वपरा विभूतिः सहसा सह ॥ ६॥

श्वासमात्रं तु यः प्राणं वेद देहस्य धारकम् ।
स्थूलशाखैकदेशं स वेद कृत्स्नं न पामरः ॥ ७॥

सर्वप्राणात्मकः श्रेष्ठः प्राण एवं प्रदर्शितः ।
तमिमं तत्त्वतो ज्ञात्वा सर्वं ज्ञास्यति तत्त्वतः ॥ ८॥

## २. मनोऽधिकरणम्

हृदयादाशिरोनाडी सुषुम्ना नाम नामतः ।
ज्ञानतेजो वहन्त्यस्ति प्राणस्य किल दीप्यतः ॥ ९॥

अन्नसारमयं सूक्ष्मं शीर्षे किमपि विद्यते ।
प्राणतेजस्तदाविश्य मनो भवति नामतः ॥ १०॥

प्रभा जलजमित्रस्य यथा प्राप्येन्दुमण्डलम् ॥
शीर्षस्थानं प्रपद्यैवं शीता स्यात् प्राणदीधितिः ॥ ११ ॥

शरीरं सकलं याति मनसः सैव दीधितिः ।
सुखदुःखात्मिकाः सर्वा ज्ञायन्ते वेदनास्तया ॥ १२ ॥

विषयाणामनुभवाः सङ्कल्पाश्च पृथग्विधाः ।
सम्भवन्ति मनस्येव विमर्शः सम्भवेन्मतौ ॥ १३ ॥

निर्गता दीधितिः प्राणात् अप्राप्ता मस्तकस्थलम् ।
मध्ये नाडीगता सूक्ष्मा मतिरित्यभिधीयते ॥ १४ ॥

स्थानं प्राणस्य हृदयं तच्चित्तमिति चोच्यते ।
द्वाभ्यां पदाभ्यामेताभ्यां मनश्च क्वचिदीर्यते ॥ १५ ॥

मूलवृत्तिरहङ्कारः प्राणस्य परिकीर्त्यते ।
अप्राप्तायां च मूर्धानं प्राणभायां स विद्यते ॥ १६ ॥

प्रज्ञागते त्वंहङ्कारे जीवो ज्ञानमयो भवेत् ।
क्रियामयः श्वासगते देहमानी मनोगते ॥ १७ ॥

अन्नसारमयत्वेन मनः स्थानस्य तत्त्वतः ।
मनोगते त्वहङ्कारे जीवोऽन्नमयवद्भवेत् ॥ १८ ॥

य एवं मनसस्तत्त्वं चित्ताहङ्कारयोरपि ।
प्रज्ञायाश्च विजानाति सोऽन्तःकरणतत्त्ववित् ॥ १९ ॥

प्राणोऽधिदैवतं शक्रो विज्ञानं पुनरुत्तमः ।
मनोऽधिदैवतं सोमो हृदयं खमुदीर्यते ॥ २० ॥

स्थूलात् क्रियावतः प्राणशाखाभेदान्मनःपरम् ।
सूक्ष्मप्रज्ञामयः प्राणशाखाभेदस्त्वतः परः ॥ २१ ॥

### ३. वागधिकरणम्

अणुतेजोमयं किञ्चित् मूलाधारे विराजते ।
ऊर्मिः शब्दमयी तस्य गायत्री वागुदाहृता ॥ २२ ॥

यावद्हृदयमाधारात् शब्दरूपैव केवलम् ।
प्रज्ञयाऽनुगृहीता सा ततो वाक्यमयी भवेत् ॥ २३ ॥

आधारस्था परा वाक् स्यात् पश्यन्ती प्रज्ञयान्विता ।
उच्चारिता वैखरी स्यात् मध्यमाकाशचारिणी ॥ २४ ॥

ब्रह्माण्डे यावदस्तीह हृदि तावच्च विद्यते ।
व्यष्टेरनुभवो यावांस्ततो मनसि नाधिकम् ॥ २५ ॥

स्वाधीने हृदये वाणी सर्वमर्थं च पश्यति ।
मनसा रञ्जितान्वाह व्यष्टेरनुभवं मितम् ॥ २६ ॥

अलोकितात्मनां वाणी मनसा रञ्जिता भवेत् ।
साक्षात्कृतस्वरूपाणां शुद्धप्रज्ञामयी भवेत् ॥ २७॥

अवरा च वरा चैवं द्विधा वाणी प्रदर्शिता ।
सामान्यादुभयत्रापि दैवतं ब्रह्मणस्पतिः ॥ २८॥

### ४. प्राणसङ्ख्याधिकरणम्

प्राणास्त्रयः पञ्च सप्त चाष्टावेकादशेति च ।
समाख्याता विपश्चिद्भिः एक एव च तत्त्वतः ॥ २९॥

मनः प्राणश्च वाक् चेति प्राणत्रयमुदाहृतम् ।
सहितं श्रोत्रचक्षुर्भ्यां इदं स्यात् प्राणपञ्चकम् ॥ ३०॥

तद्युक्तं रसनात्वग्भ्यां प्राणसप्तकमीर्यते ।
घ्राणं प्रचक्षते प्राणं श्रेष्ठस्थानेऽत्र केचन ॥ ३१॥

पाणीन्द्रियेण संयुक्तं प्रोक्तं सप्तकमष्टकम् ।
अत्र प्रकरणे प्राणा उदिता ग्रहसंज्ञया ॥ ३२॥

ज्ञानेन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाणि च ।
आत्मा त्वेकादशस्तेषां प्राणा एकादश स्मृताः ॥ ३३॥

केचिदात्मपदेनात्र मनो वाच्यं प्रचक्षते ।
विज्ञानमपरे प्राहुः श्रेष्ठं त्वेकादशात्परम् ॥ ३४॥

श्रेष्ठ एको भवेत्प्राणः तस्यैवान्ये विभूतयः ।
इति तत्त्वदृशः प्राज्ञा प्रवदन्ति समासतः ॥ ३५॥

अनुक्तानां प्रकरणे श्रेष्ठं एवोपसंहृतिः ।
तत्र तत्र प्रकल्प्या स्यात् तस्य ह्यन्ये विभूतयः ॥ ३६॥

उपदेशं विभूतीनां विना श्रेष्ठं करोति चेत् ।
तत्र विच्चिन्तयेत् घ्राणं श्रेष्ठस्थानीयमिन्द्रियम् ॥ ३७॥

प्राणा एकादश व्यष्ट्या रुद्रा एकादशोदिताः ।
प्राणानां समवायस्तु श्रेष्ठो रुद्रो मरुत्पिता ॥ ३८॥

वागीष्टे जपतां नित्यं प्राणो वै युञ्जतां सताम् ।
मन ईष्टे वृत्तवतां ईष्टे भक्तिमतां त्रयम् ॥ ३९॥

**५. प्रमाणाधिकरणम्**

प्रमाणं दृश्यते लोके धीन्द्रियं वागिति द्विधा ।
वरैव वाक् प्रमाणं स्यात् नावरानूक्तिरेव सा ॥ ४०॥

वेदाः सर्वे वरा वाणी शुद्धज्ञानमया हि ते ।
अन्तरस्यात्मनः साक्षात् ते स्युः शब्दमयं महः ॥ ४१॥

शक्तिः समष्टेर्व्यष्टेस्तु व्युत्पत्तिर्वेददर्शने ।
नित्यत्वं चाप्यनित्यत्वं वेदानां भागशो भवेत् ॥ ४२॥

प्रत्यक्षमनुमानं चेत्युभयं द्विविधं पुनः ।
साक्षात्प्रमाणं प्रत्यक्षमनुमानं तु लिङ्गतः ॥ ४३ ॥

वेदः प्रमाणं प्रत्यक्षं शाब्दं विद्वद्भिरुच्यते ।
अनुमानं तु तन्मूला स्मृती रागादिवर्जिता ॥ ४४ ॥

## ६. पञ्चाहुत्यधिकरणम्

ऊर्ध्वविष्टपपर्जन्यपृथिवीपुरुषाऽबलाः ।
जन्मप्रसङ्गे पञ्चाग्नीन् होमस्थानान्यपां विदुः ॥ ४५ ॥

रसो जैवातृको वृष्टिः अन्नं रेतश्च कीर्त्यते ।
होमद्रव्यन्त्वेकमेव पञ्चधा परिणामतः ॥ ४६ ॥

विराड्विभूतिभूतानां भावानामत्र होतृता ।
यथा स्वभावं कल्प्या स्यात् तेषामेव च देवता ॥ ४७ ॥

पञ्चम्यामाहुतावापो भजन्ति पुरुषाह्वयम् ।
अनुप्रवेशसिद्धान्तात् जन्मापत्तिस्तु नात्मनः ॥ ४८ ॥

प्राणस्योपाधिभूतस्य पार्थक्येन त्वहङ्कृतिः ।
उत्क्रान्तिगत्यागतयो मृत्युश्चैवास्य नात्मनः ॥ ४९ ॥

आत्मनानुप्रविष्टस्य प्राणस्य पुरुषाख्यता ।
एकैव तु महाशक्तिः सर्वप्राणावभासिका ॥ ५० ॥

प्राण एव पृथग्भूतो नात्मा प्रतिकलेबरम् ।
अनुप्रविशति प्राणान् एकस्यैवात्मनो महः ॥ ५१॥

यथा सर्वाणि चक्षूंषि विशेदेकस्य भा रवेः ।
श्रेष्ठान्प्राणांस्तथा सर्वान् विशेदेकस्य भाऽऽत्मनः ॥ ५२॥

आहुतिः क्रमतः सिद्धं आवृत्तश्चन्द्रमण्डलात् ।
प्राणं चाप्याविशेत्प्राणो दीपो दीपमिवाम्बरम् ॥ ५३॥

आहुतिः क्रमतः सिद्धे केवले कुलवासनाः ।
अन्येन भूय आविष्टे भवन्त्यन्यस्य वासनाः ॥ ५४॥

## अथ षष्ठः परिच्छेदः

### १. धर्मवृत्ताधिकरणम्

संस्कारजनकं कर्म धर्म इत्यभिधीयते ।
तस्यावबोधे त्वस्माकं प्रमाणं वैदिको विधिः ॥ १॥

वेदाविरुद्धः स्मार्तश्च विधिर्वेदानुमापकः ।
रागद्वेषादिभिः स्मर्तुः दोषैर्न यदि रञ्जितः ॥ २॥

संस्कारस्त्वान्तरत्वाच्च सूक्ष्मत्वाच्च न गृह्यते ।
यथोक्ताचारसम्पन्ने तेजसैवानुमीयते ॥ ३॥

परैरनिन्दितं कर्म यत्परस्योपकारकम् ।
साधारणं लोकसिद्धं तद्वृत्तमभिधीयते ॥ ४॥

धर्मस्य कश्चिदेवार्थो वृत्तस्यान्यत् प्रयोजनम् ।
धर्मवान् लभते शक्तिं वृत्तवांच्छान्तिमृच्छति ॥ ५॥

धर्मनामापि वृत्तस्य व्यवहारेषु दृश्यते ।
धर्मशास्त्रे कथास्तस्मादुभयोर्धर्मवृत्तयोः ॥ ६॥

## २. भक्तियोगाधिकरणम्

समर्प्य भारमीशस्य मस्तके भजनं सदा ।
अनन्याधीनमनसा भक्तियोग उदाहृतः ॥ ७॥

ब्रह्माण्डस्याधिकार्येष लक्ष्यो भास्करबिम्बगः ।
अथवा मध्यमो देवः तृतीयो नोपलभ्यते ॥ ८॥

रूपध्यानेन होमेन स्तुत्या मन्त्रजपेन च ।
आराधनं प्रीतियुक्तं भजनं परिकीर्त्यते ॥ ९॥

हिरण्मयं वक्ति वेदो यथा मध्यमपूरुषम् ।
स्पष्टं वदति वेदान्तः तथा पुरुषमुत्तमम् ॥ १०॥

हिरण्मयं वपुरिदं सिद्धमीशितुरिच्छया ।
रूपाण्यन्यानि सर्वाणि मनोभावनयैव नः ॥ ११॥

प्रीत्यै स्यादुत्तमस्यैव मण्डलान्तरवर्तिनः ।
कीर्तेस्तदवताराणां कीर्तनं भक्तिपूर्वकम् ॥ १२॥

३. अवताराधिकरणम्

निष्कामं कर्म यज्ञः स्यात् तेन कर्ता न बध्यते ।
यज्ञेश्वराय सम्पन्नं तस्य कर्मैव तद्भवेत् ॥ १३॥

सा विभूतिर्जगद्भर्तुः कर्मात्मा परिकीर्त्यते ।
यज्ञो वै विष्णुरित्येतत् ब्राह्मणं त्वत्र मापकम् ॥ १४॥

यज्ञशक्त्या तया देवो धर्मे क्षयमुपागते ।
तस्य संस्थापनार्थाय प्रादुर्भवति भूतले ॥ १५॥

आहुतिः क्रमतः सिद्धे प्राणे सा शक्तिरद्भुता ।
लोकान्तरादागते वा स्फुरतीशितुरिच्छया ॥ १६॥

कर्तव्यस्यानुसारेण तथा भूते तिरश्चि वा ।
आत्मयोगबलात् सिद्धे प्राणिन्युत विलक्षणे ॥ १७॥

अनुप्रवेशो यत्प्राणे स च विश्वाधिकारिणः ।
प्रादुर्भावः समाख्यातः सर्वसाधारणस्त्वयम् ॥ १८॥

योगीन्द्राणां महर्षीणां पश्यतामन्तरं महः ।
यद्यपि स्याद्देवतात्वं तदन्यद्धेतुभेदतः ॥ १९॥

महर्षीणां दशा तादृक् आरोहणमुदीर्यते ।
अवतारोऽन्य एवास्मात् उत्तमेच्छैकमूलकः ॥ २० ॥

यथा स्वभावेन बहून् आविशत्यन्तरो भवन् ।
तथेच्छयापि च बहून् आविशेत् प्रभुरेकदा ॥ २१ ॥

उत्तमस्येव सर्वेषां देवानामपि शुश्रुम ।
तत्तत्कार्यानुसारेण प्रादुर्भावं महीतले ॥ २२ ॥

न तेषामवतारेषु भवेद्यज्ञः प्रयोजकः ।
आवेश आत्मशक्त्यैव कयाचित्तेषु सम्भवेत् ॥ २३ ॥

**४. मन्त्रयोगाधिकरणम्**

वर्णावल्यनुसन्धानपूर्वको मनसा जपः ।
एकाग्रत्वेन मन्त्रस्य मन्त्रयोग उदाहृतः ॥ २४ ॥

मन्त्रयोगेन देवस्य प्रसादः सुलभः स्मृतः ।
सर्वेष्वपि च मन्त्रेषु प्रणवस्तु विशिष्यते ॥ २५ ॥

आत्मनस्त्रिविधस्यापि प्रणवो नाम कीर्त्यते ।
ईश्वरस्यैव केऽप्याहुः सत एव परे विदुः ॥ २६ ॥

सताराव्याहृतियुता गायत्री च प्रशस्यते ।
विलोकिता गाधिजेन विश्वामित्रेण या पुरा ॥ २७ ॥

यजुर्मन्त्रेषु सर्वेषु शस्ता पञ्चाक्षरी मता ।
प्रजपेत्तां सप्रणवां देवता यत्र मध्यमः ॥ २८॥

सर्वेषु साममन्त्रेषु गायत्र्येकपदोत्तमा ।
ऐन्द्री दृष्टा वसिष्ठेन महता तपसा पुरा ॥ २९॥

विदुः प्रशस्तां तस्यैव रौद्रीं चान्यामनुष्टुभम् ।
कश्यपेन च सन्दृष्टां त्रिष्टुभं जातवेदसः ॥ ३०॥

ब्राह्मणोक्तेषु मन्त्रेषु नामत्रयमनुः परः ।
अतिदीर्घेण तपसा भारद्वाजो यमाप्तवान् ॥ ३१॥

तान्त्रिकेषु तु मन्त्रेषु श्रेष्ठा पञ्चदशी मता ।
गायत्रीमासुरीं प्राहुः यां मौनगुरुवीक्षिताम् ॥ ३२॥

यः कश्चिद्वैदिको मन्त्रः तान्त्रिको वा सतां मतः ।
सर्वोऽपि च स संसिध्यै भवेदेव न संशयः ॥ ३३॥

### ५. कर्मयोगाधिकरणम्

स्थूला वायुमयी शाखा प्रोक्ता प्राणस्य या पुरा ।
विभूतिरियमेतस्य यद्व्यानो नाम मारुतः ॥ ३४॥

वायोर्मूलं भवेत् श्वासो यं प्राणं भिषजो विदुः ।
शरीरव्यापिनीशाखा तस्य व्यान उदीर्यते ॥ ३५॥

स्मरन् कर्तारमात्मानं कुर्यात् कर्माखिलं कृती ।
अकृत्वा यत्नतः सङ्गं फले वा विषयेऽपि वा ॥ ३६॥

विस्मर्तव्यो नाप्रमत्तैः आत्मा कर्मणि कर्मणि ।
क्रियायां वा मतिं कुर्यात् व्यानस्योपासनं तु तत् ॥ ३७॥

गच्छन् कुर्वंश्च विसृजन् रममाणो वदन्नपि ।
कर्तारं योऽनुसन्दध्यात् स व्याने प्रतितिष्ठति ॥ ३८॥

क्रियां वा योऽनुसन्दध्यात् स व्यानं नातिलङ्घते ।
शरीरे व्याप्नुवत्तेजः स्यादेवं बलवत्तरम् ॥ ३९॥

क्षीरं नीरे यथा तेजो देहे सक्तस्य कुर्वतः ।
कुर्वतस्त्वप्रमत्तस्य तण्डुलेषु तिला इव ॥ ४०॥

शरीरव्यापि चेत्तेजः तण्डुलेषु तिला इव ॥
तच्छरीरापराभूतं मृत्युतस्त्रायते नरम् ॥ ४१॥

छन्दोगानामुपनिषद्युदितामतिगोपिताम् ।
इमां व्यानोद्गीथविद्यां कर्मयोगं विदो विदुः ॥ ४२॥

अग्निहोत्रादिकं कर्म क्रियमाणं यथाविधि ।
फलापेक्षाविरहितं कर्मयोगं परे विदुः ॥ ४३॥

## ६. ज्ञानयोगाधिकरणम्

प्रज्ञाया अप्रमादेन धृतिरात्मनि कीर्तितः ।
ज्ञानयोगस्तद्विभेदान् विद्याः प्राहुर्मनीषिणः ॥ ४४॥

उपासनज्ञानयोगौ यः पृथक् कुरुते जनः ।
तेन वेदान्तशास्त्रस्य तात्पर्यं नैव शोधितम् ॥ ४५॥

अभ्यासस्त्वात्मनिष्ठाया उपासनमुदीर्यते ।
तदेव ज्ञानयोगाख्यं विद्याख्यमपि तत् स्मृतम् ॥ ४६॥

अधिका भक्तितो विद्या मन्त्रतश्चाधिका मता ।
कर्मतश्चाधिका विद्या तस्माद्विद्यां श्रयेत ना ॥ ४७॥

विद्यां दिव्यं धनं प्राहुः अविद्यामासुरं धनम् ।
शोभन्ते विदुषस्तस्मात् भक्तिर्मन्त्राश्च कर्म च ॥ ४८॥

एकत्वेऽपि च निष्ठायाः पथां भेदैः प्रकीर्त्यते ।
ज्ञानयोगस्तु विविधः श्रुत्यन्तेषु महर्षिभिः ॥ ४९॥

ज्ञानयोगस्तु यत् प्राज्ञो न स्खलत्यन्तरात्मनः ।
तदेवोपासनस्यापि लक्षणं परिकीर्तितम् ॥ ५०॥

यो न वेद पृथक् प्राज्ञो ज्ञानादेवमुपासनम् ।
स यथावन्महर्षीणां पन्थानमनुगच्छति ॥ ५१॥

विजानन् पृथगप्राज्ञो ज्ञानयोगादुपासनम् ।
शास्त्रज्ञानेन सन्तृप्तिं गच्छन्नन्तेऽवसीदति ॥ ५२॥

**अथ सप्तमः परिच्छेदः**

**१. उद्गीथविद्याधिकरणम्**

अथाक्षरोद्गीथविद्यां सर्वोपासकशीलिताम् ।
सर्ववेदान्तसङ्गीतां प्रवक्ष्यामि स्वरूपतः ॥ १॥

अक्षरं परमं प्राहुः ओङ्कारं स्वरकोविदाः ।
अनेन वाचःसन्तृण्णाः पलाशानीव शङ्कुना ॥ २॥

दृश्यते सूक्ष्म ओङ्कारः स्वशक्तेः परमः स्वरः ।
एतस्यैव स्वरा अन्ये विकाराः परिकीर्तिताः ॥ ३॥

सर्वेषामपि शब्दानां प्रणवं प्रकृतिं विदुः ।
शब्दब्रह्मेति गीतोऽयमेतस्मादेव कारणात् ॥ ४॥

वाच्यः शब्दप्रकृत्यैव भूतप्रकृतिरीशिता ।
शाब्दैर्विकारैरुच्यन्ते विकाराः सार्वभौतिकाः ॥ ५॥

मुख्यं नाम तदीशस्य प्रणवं परिचक्षते ।
नामान्यन्यानि सर्वाणि गौणानि विदुषां मते ॥ ६॥

ओङ्कारमीशानमाह भगवांश्च पतञ्जलिः ।
वाच्यवाचकयोर्भेदो मृग्यते चेन्न लक्ष्यते ॥ ७॥

स्वरन्नेव विजानाति स्वरन्नेव श्वसित्यपि ।
ततो ज्ञानं क्रिया चेति द्वयं न स्वरमन्तरा ॥ ८॥

ओङ्कारमेवं विज्ञाय स्वशक्तेः सहजं स्वरम् ।
सूक्ष्ममन्तरुपासीत प्रज्ञयैव गिरा तु न ॥ ९॥

उच्चार्यमाणस्तु गिरा प्रणवो विकृतिर्भवेत् ।
गौणेभ्य ईशनामेभ्यः तादात्म्यं नातिरिच्यते ॥ १०॥

छात्राणां वा गृहस्थानां तपतां वा तदक्षरम् ।
स्वरं सहजमस्माकं निषेद्धुं को नु शक्नुयात् ॥ ११॥

उच्चार्यमाणे प्रणवे गौणनाम्नि महेशितुः ।
स्वत्वं यद्यतिनामेव सामयाचारिकं तु तत् ॥ १२॥

संसारिणो योगिनश्च शक्तिः स्वरति नित्यशः ।
तं स्वरं यदि जानाति योगी कात्र क्रिया न वा ॥ १३॥

या क्रिया सहजा नित्या स्वशक्तेः स्वररूपिणी ।
अनन्याधीनमनसा तस्य ज्ञानमुपासनम् ॥ १४॥

बाह्यस्तु रुद्र इत्युक्तः स्वरोऽयं रोदितीत्यतः ।
एतस्योपासनान्मर्त्यः सर्वशब्दाधिपो भवेत् ॥ १५॥

शब्दानाश्रित्य सर्वाणि विज्ञानानीह शेरते ।
यद्वशे व्यापृतः शब्दो विज्ञानान्यपि तद्वशे ॥ १६॥

एतस्योपासका एव मुनयो ददृशुः पुरा ।
वेदानेष हि वेदानां प्रभवः परिकीर्तितः ॥ १७॥

पदमुक्तमिदं वैदैः लक्ष्यं च तपसामिदम् ।
नैष्ठिका एतदिच्छन्ति यदव्यक्तः परः स्वरः ॥ १८॥

एषा मुद्रा स्वरस्यास्य यदनुज्ञा विजानतः ।
तिष्ठति स्वर एतस्मिन् अनुजानन्निव स्थितः ॥ १९॥

य एवं विदनुज्ञात्मा ध्यायति प्रणवं स्वरम् ।
सर्वेषामपि कामानां स समर्थयिता भवेत् ॥ २०॥

वाणी श्वासश्च मिथुनं स्वरेऽस्मिन् प्रतितिष्ठति ।
य एवं विदिमं ध्यायेत् कामाप्तिस्तस्य निश्चिता ॥ २१॥

सर्वेषामपि लोकानां अस्मिन् रसतमे स्वरे ।
निष्ठितः सततं विद्वान् अमृतत्वाय कल्पते ॥ २२॥

एषाक्षरोद्गीथविद्या सर्ववेदान्तसंस्तुता ।
उपासकानां बोधाय यथावदनुकीर्तिता ॥ २३॥

## २. संवर्गविद्याधिकरणम्

अथ संवर्गविद्यायाः पद्धतिं परिचक्ष्महे ।
रैक्वेण जानश्रुतये दर्शितायाः सयुग्वना ॥ २४॥

प्राणस्य स्थूलशाखायाः द्वारा वायोरुपासनम् ।
प्रोक्ता संवर्गविद्येति सर्वपुण्यततेस्तुला ॥ २५॥

जानन्नेव श्वसेन्नित्यं एतद्वायोरुपासनम् ।
तदा स्याच्छक्तिसम्पूर्णा विज्ञानानुसृताक्रिया ॥ २६॥

ज्ञानक्रियासमावेशात् तेजसो मथनं भवेत् ।
ऊष्मा हि जायते तत्र सूक्ष्मोऽप्यधिकविक्रमः ॥ २७॥

विभक्तं सर्वनाडीषु तेजो देहस्य चालकम् ।
सूक्ष्मां सुषुम्नां प्रत्येकां ऊष्मणा ह्रियते तदा ॥ २८॥

एकीभूतं तु तत्तेजः सुषुम्नायां महत्तरम् ।
स्थूलदेहात् पृथग्भूतं अमृतत्वाय कल्पते ॥ २९॥

प्राणस्यैव तु तत्तेजो द्रव्यं किमपि नेतरत् ।
विधाय तत्पृथग्देहान्न ना मृत्युमवाप्नुयात् ॥ ३०॥

देहे संसारिणस्तेजः सैन्धवं सलिले यथा ।
नवनीतं यथा तक्रे शरीरे योगिनो महः ॥ ३१॥

नवनीतं यथा तक्रे यच्छरीरे निजं महः ।
अप्रकम्प्यः स शारीरैः सुखदुःखैर्न लिप्यते ॥ ३२॥

अग्निज्वालावदेतस्य सङ्कल्पः सुमहाद्युतिः ।
देवसङ्कल्पवन्मोघो न भविष्यति कर्हिचित् ॥ ३३॥

मुख्यप्राणोद्गीथविद्या प्राणविद्या च विश्रुता ।
अत्र संवर्गविद्यायां अन्तर्भूते स्वरूपतः ॥ ३४॥

सर्वेषामपि पापानां इतरप्राणजन्मनाम् ।
अन्तश्चरन् मातरिश्वा मध्यस्थानमुदीर्यते ॥ ३५॥

स्थितिरुद्गीथविद्यायां अन्तर्या स्यादुपासितुः ।
सैवात्रापि स्थितिः श्वासस्वरयोरल्पभेदतः ॥ ३६॥

अन्तः स्वरं विजानाति यमेवाक्षरचिन्तकः ।
तं वायुं मन्यते विद्वान् संवर्गोपासकः कृती ॥ ३७॥

आरम्भे लक्ष्यभेदेन विद्याभेदः प्रकीर्तितः ।
उपासने तु गम्भीरे श्वासः स्वरमयो भवेत् ॥ ३८॥

इति सञ्जीविनीविद्या सर्वपापप्रणाशिनी ।
प्रतिमा सर्वपुण्यानां यथावदनुकीर्तिता ॥ ३९॥

३. ज्योतिर्विद्याधिकरणम्

तीव्रनिर्विषयध्यानात् उद्दीप्तं ज्योतिरान्तरम् ।
ऊष्मद्वारानुसन्दध्यात् ज्योतिर्विद्येयमुच्यते ॥ ४०॥

यद्यप्यन्यासु विद्यासु दीप्तं स्याज्ज्योतिरान्तरम् ।
तथापि लक्ष्यमत्र स्यात् ऊष्मद्वारेत्यसौ भिदा ॥ ४१॥

अन्धो हस्तेन संस्पर्शात् साक्षात् कुर्यात् यथाऽनलम् ।
एवमूष्मानुसन्धानात् पश्येन्ना ज्योतिरान्तरम् ॥ ४२॥

एवं स्वरानुसन्धानात् शृणुयाज्ज्योतिरान्तरम् ।
उद्गीथविद्यासन्दर्भे स्वरध्याानं प्रकीर्तितम् ॥ ४३॥

इति विद्यात्रयं प्रोक्तं मध्यमो यासु देवता ।
आकाशे वैभवात् क्रीडन् रुद्रवातेन्द्रनामभिः ॥ ४४॥

४. भूमविद्याधिकरणम्

विकारजातं विश्वस्मिन् नामरूपात्मकं तु यत् ।
तदंशस्य परित्यागात् पश्येत्सदखिलं कृती ॥ ४५॥

स्थितौ स सम्प्रसन्नायां स्थितः सर्वविकल्पजित् ।
भेदबुद्धिं महाघोरां जयेत्संसारकारिणीम् ॥ ४६॥

सम्प्रोक्ता भूमविद्येयं पूर्णानुभवदायिनी ।
वर्णयामास यां स्कन्दो नारदाय महर्षये ॥ ४७॥

आत्मानं सर्वभूतेषु सर्वभूतानि चात्मनि ।
भूम्नस्तु शीलयन् विद्यामभेदेन निरीक्षते ॥ ४८॥

तस्य सर्वमिदं मिथ्या नामरूपात्मकं जगत् ।
सत्यरूपमधिष्ठानं स्वात्मरूपं प्रभासते ॥ ४९॥

एतामेव महाविद्यां भगवान् शङ्करो गुरुः ।
उपादिशत् स्वशिष्येभ्यो भेदबुद्धिं विमर्दयन् ॥ ५०॥

**५. शाण्डिल्यविद्याधिकरणम्**

जायते विश्वमीशानात् ईशाने प्रतितिष्ठति ।
ईशाने लीयते चान्ते तस्य कर्म महत्तरम् ॥ ५१॥

तस्येदं भुवनं कार्यं तदुपादानकं स्मृतम् ।
भिन्न विकारैर्विविधैरपि तस्मान्न भिद्यते ॥ ५२॥

सोऽणीयांश्च महीयांश्च स्वरूपाद्वैभवात्तथा ।
शान्त एवमुपासीत सर्वत्र समदर्शनः ॥ ५३॥

मतिस्तु भूमविद्यायां अभेदानुभवात्मिका ।
विद्यायामत्र तु मतिः विभूत्यनुभवात्मिका ॥ ५४ ॥

विकारांशपरित्यागात् शेषो भूमा प्रकीर्तिता ।
विकाराणां विभूतित्वबुद्ध्यात्र तदुपासनम् ॥ ५५ ॥

शिल्पं विचित्रमालोक्य यथा ना स्तौति शिल्पिनम् ।
जगद्वीक्ष्यैवमीशानं स्तौति विद्यामिमांश्रितः ॥ ५६ ॥

इयं प्रदर्शिता विद्या शाण्डिल्येन महर्षिणा ।
भवेदिमां श्रितां विद्यां अन्ते पूर्णानुभूतिमान् ॥ ५७ ॥

## ६. भृगुविद्याधिकरणम्

परित्यज्य सदा दुःखं आनन्दानुभवात्मिका ।
स्थितिर्निर्विषयापेक्षा भृगुविद्या प्रकीर्तिता ॥ ५८ ॥

ईशस्यानन्दरूपत्वात् ईशे सम्प्रतितिष्ठति ।
योनिरन्तरमानन्दे युक्तात्मा सुस्थिरो जनः ॥ ५९ ॥

वरुणस्योपदेशेन भृगुर्नाम महानृषिः ।
तपसा भूयसा ब्रह्म सुखरूपं व्यलोकयत् ॥ ६० ॥

आनन्दे तद्दृढा निष्ठा भृगुविद्या प्रकीर्त्यते ।
निष्ठितो भृगुविद्यायां ब्रह्मानन्दं समश्नुते ॥ ६१ ॥

द्वे मुद्रे भृगुविद्याायां रहस्ये परिकीर्तिते ।
इन्द्रयोनौ दृष्टिरेका दृष्टिर्जिह्वारसे परा ॥ ६२॥

## ७. उपकोसलविद्याधिकरणम्

सत्यकामात्तु जाबालात् यां विद्यामुपकोसलः ।
लब्धवानुत्तमां गोप्यां तां वक्ष्यामि स्वरूपतः ॥ ६३॥

जीवात्मनो जागरिते स्थानं नयनमण्डलम् ।
द्रष्टारं तत्र गृह्णीयात् तेजोरूपमुपासकः ॥ ६४॥

संसारी विषयान् पश्येत् अनालक्ष्यैव साक्षिणम् ।
दर्शने दर्शने ज्ञानी साक्षिणि प्रतितिष्ठति ॥ ६५॥

यः साक्षिणि सदा तिष्ठेत् दृश्ये सङ्गविवर्जितः ।
सोऽन्ततो देवयानेन पथोर्ध्वं याति विष्टपम् ॥ ६६॥

सूर्यमण्डलसंस्थेन चक्षुर्मण्डलवर्तिनः ।
अभेदमाहुर्विद्वांसो विद्याङ्गं स च निश्चयः ॥ ६७॥

यस्तेजः पश्य कं ध्यायेत् पुरुषं स हिरण्मयम् ।
अक्षिमण्डलमध्यस्थं आविशेन्नैव संशयः ॥ ६८॥

## ८. मधुविद्याधिकरणम्

अन्यदादित्यरश्मिभ्यः सारभूतं न विष्टपे ।
आदित्यं देवमध्वाहुः मधुनाडीश्च दीधितीः ॥ ६९॥

दर्शं दर्शं प्रतृप्यन्ति तमेव महसां निधिम् ।
देवा लोकत्रयस्थाना नाश्नन्ति न पिबन्ति च ॥ ७०॥

पदार्था अनुभूयन्ते रश्मिद्वाराऽस्मदादिभिः ।
केवला अनुभूयेरन् रश्मयो ज्ञानयोर्मिभिः ॥ ७१॥

रश्मिद्वारैव देवस्य सूर्यस्यानुभवो भवेत् ।
सूर्यस्यानुभवाज्जीवो देहतः स्यात् पृथक्कृतः ॥ ७२॥

सर्वेषामपि शब्दानां प्रणवः प्रकृतिर्यथा ।
सर्वेषां व्यक्तरूपाणां सूर्यभा प्रकृतिस्तथा ॥ ७३॥

विकृतानि परित्यज्य रूपाणि सततं कृती ।
एकमेव रविज्योतिः सर्वव्याप्तं विलोकयेत् ॥ ७४॥

रात्रावपि रविज्योतिः अस्ति व्योम्नि विभासकम् ।
तद्विना नैव तारादिदर्शनं सम्भविष्यति ॥ ७५॥

गोलस्य पश्चात् सूर्यस्य संस्थितेः स्यान्निशीथिनी ।
तदाप्यतिक्रम्य भान्ति भूच्छायां तस्य रश्मयः ॥ ७६॥

बहिस्तु दृश्यते रश्मिः स एवान्तः प्रपश्यति ।
अतो ज्ञानानि सर्वाणि प्रतितिष्ठन्ति रश्मिषु ॥ ७७॥

सदा पश्यति यस्तेजो बहिरन्तश्च भास्वतः ।
दिनमेवास्य सर्वोऽपि कालः स्यात्सम्प्रपश्यतः ॥ ७८॥

मधुविद्यां विजानाति य एतामतिगोपिताम् ।
इहैव तस्यानुभवः परस्य ज्योतिषो भवेत् ॥ ७९॥

## ९. दहरविद्याधिकरणम्

हृदयं परमं व्योम तदुक्तं दहराह्वयम् ।
आत्मनस्तु स्वरूपं तत् ऋषयः परिचक्षते ॥ ८०॥

व्योमैव ज्योतिरुद्दीप्तेः सूक्ष्मत्वाज्ज्योतिरेव खम् ।
तत्च्छ्रेष्ठं प्राणमाविश्य भजते पुरुषाह्वयम् ॥ ८१॥

मज्जन्निव मनो वृत्त्या दहरे निष्ठितो भवेत् ।
चिन्वन्निवोतयुक्तात्मा स्वात्मनिष्ठैव सा मता ॥ ८२॥

निष्ठितः सततं विद्वान् दहरे युक्तमानसः ।
ब्रह्माण्डे संस्थितान् कामान् सर्वानपि च साधयेत् ॥ ८३॥

प्रथमा देवता सैव या प्रोक्ता दहराह्वया ।
निष्ठितो दहरे विद्वान् देवतैव स्वयं भवेत् ॥ ८४॥

## १०. वैश्वानराधिकरणम्

आत्मनोऽभिविमानस्य यदुपास्ति निरन्तरा ।
वैश्वानरस्य विद्येयं कीर्तिता मुनिसत्तमैः ॥ ८५॥

अभिमानस्त्वहंवृत्तिः आत्मनः परिकीर्त्यते ।
तत्र नित्यं स्थितिर्विद्या तया वैश्वानरे स्थितिः ॥ ८६॥

प्रादेशमात्रं तं प्राहुः देवं वैश्वानरं विदुः ।
भाक्तमेव बुधैर्ज्ञेयं तत्प्रमाणप्रकल्पनम् ॥ ८७॥

केचिज्जागरितस्थानं मत्वा वैश्वानरं विदः ।
चुबुकादिललाटान्तं प्रमाणं तत्प्रचक्षते ॥ ८८॥

प्राज्ञमेव परे तं तु मत्वा वैश्वानरं विदः ।
प्रमाणं तत्प्रभाषन्ते नाभ्यादिहृदयावधि ॥ ८९॥

तैजसं पुरुषं केऽपि मत्वा वैश्वानरं विदः ।
कण्ठान्तं हृदयारम्भं तत्प्रमाणं प्रचक्षते ॥ ९०॥

उपकोसलविद्यायां अस्यां चापि स्थितिः समा ।
भेदो विलोकनात् शुद्धात् तथाहंवृत्तिसंयुतात् ॥ ९१॥

यस्तु वैश्वानरं पश्येत् आत्मानं तपसो बलात् ।
दुराधर्षमहावीर्यः स स्वयं देवता भवेत् ॥ ९२॥

## ११. द्विजन्माधिकरणम्

एष तूद्देशतः प्रोक्तो विद्यानां सङ्ग्रहो मया ।
सर्वास्वपि च विद्यासु संस्कारस्त्वान्तरो भवेत् ॥ ९३॥

भक्त्या वा मन्त्रयोगेन कर्मयोगेन वा पुनः ।
भवेदान्तरसंस्कारो विद्याभिरिव देहिनाम् ॥ ९४॥

धर्म एष परः सूक्ष्मो येन संस्क्रियतेऽन्तरम् ।
स चोक्तलक्षणाद्योगचतुष्कान्नातिरिच्यते ॥ ९५॥

संस्कारेणान्तरेणैव द्वितीयं जायते पुनः ।
तमेवाहुर्द्विजन्मानं भाक्तमन्यत्र तत्पदम् ॥ ९६॥

# अथाष्टमः परिच्छेदः

## १. देवयानाधिकरणम्

गतः शताधिकां नाडीं शरीरादुपसंहृतः ।
विज्ञानात्मा देवयानं उत्क्रान्तो मार्गमृच्छति ॥ १॥

सुषुम्नायाः पुरोभागं विदुर्नाडीं शताधिकाम् ।
तयोर्ध्वमायन्नमृतो भवतीति प्रचक्षते ॥ २॥

देवयानं गतो मार्गं अमृतोऽशिथिलस्मृतिः ।
उत्तमं विष्टपं याति पुनरावृत्तिवर्जितः ॥ ३॥

स्पृहणीया गतिः प्रोक्ता मुनिभिः प्राणिनामियम् ।
अत्र शाश्वत आनन्दो नाशोऽत्र न कदाचन ॥ ४॥

उत्तमो येन मार्गेण तेजसा याति पूरुषान् ।
वयं तेनैव मार्गेण शक्नुमो यातुमुत्तमम् ॥ ५॥

मार्गोऽयमेव प्राणानां एषैव सरणिस्त्विषाम् ।
रेणुभिस्तैजसैर्बद्धो दिव्यः पन्था असौ श्रुतः ॥ ६॥

## २. पितृयानाधिकरणम्

देहतो देवतासेवी यद्यप्यनुपसंहृतः ।
उद्धृतोऽनुग्रहाच्चन्द्रं पितृयानेन गच्छति ॥ ७॥

प्राणानां कामदिग्धानाम् अपां चन्द्रत्विषामपि ।
पितॄणां च पिशाचानां एष मार्गः प्रकीर्तितः ॥ ८॥

तत्र भोगान् योऽनुभूय पुनरावर्तते भुवम् ।
अमृतश्चेदाविशति मृतश्चेत्पूर्ववत्क्रमः ॥ ९॥

तस्येन्दुरश्मिभूतत्वात् नास्त्यत्र प्रथमाहुतिः ।
मरणं चाप्यमरणं तथा तत्र यथा भुवि ॥ १०॥

चन्द्रलोकं गतानां च ततो विद्याबलात्पुनः ।
देवयानेन गमनं नासाध्यमिति शुश्रुम ॥११॥

पूर्वोऽर्चिरादिमार्गः स्यात् धूमादिरयमुच्यते ।
धूमस्तोयविकारोऽत्र ज्ञातव्यस्तत्त्वकोविदैः ॥१२॥

पथोः कालविशेषाणां उभयत्र च या श्रुतिः ।
विशेषणतया तां तु जानीयादौपचारिकीम् ॥१३॥

### ३. तृतीयस्थानाधिकरणम्

देवानुग्रहमाप्तः सः कर्मणा चरितेन वा ।
अविजानन्नुतात्मानं तृतीयस्थानभाग्भवेत् ॥१४॥

जननं मरणं चेति परिणामस्तु भौतिकः ।
यत्रैव तज्जडं विश्वं तृतीयस्थानमुच्यते ॥१५॥

श्रेष्ठस्य स्यात् प्रकृत्यम्बुभावो मरणसंज्ञकः ।
आहुतिः क्रमतस्तस्य श्रेष्ठभावो जनुः पुनः ॥१६॥

अपां साधारणीनां च मृतप्राणस्य चाप्यपाम् ।
जन्मप्रकरणे तुल्या गतिर्वेद्या मनीषिभिः ॥१७॥

स्वस्य प्रकृतिभूतानां यत्पाको विविधस्त्वपाम् ।
तदेव नारकं कष्टं यावज्जन्म पुनर्भवेत् ॥१८॥

इयमेवात्महत्या यत् जडभावः प्रमादतः ।
लोका असुर्या एते स्युः येषु नात्माऽवभासते ॥ १९॥

प्राणानां भासकं ब्रह्म भूतानामिह पाचकम् ।
प्राणप्रधानः स्वर्गः स्यात् नरकं शुद्धभौतिकम् ॥ २०॥

विज्ञानं जयति स्वर्गे नरके तूपहन्यते ।
शरीरिणां शरीरेषु तस्य दृष्टा गतिर्द्विधा ॥ २१॥

स्थानात् तृतीयात् सर्वोऽपि विज्ञानपरिपन्थिनः ।
पच्यमानात् सदा शक्त्या जुगुप्सेत शरीरभृत् ॥ २२॥

### ४. सम्पदधिकरणम्

परिच्छिन्नस्त्वनुभवः संसार इति कथ्यते ।
अनुभूतिरखण्डा तु सम्पदित्यभिधीयते ॥ २३॥

पृथक्कृतो जनो देहात् केवलं प्राणमाश्रितः ।
पश्येत्समस्तमात्मानं फलानामवधिस्तु सः ॥ २४॥

प्राणादपि पृथग्भावं मन्यन्ते केऽपि सम्पदि ।
तदा भोक्तुरभावेन भवेत्सम्पत्सुषुप्तिवत् ॥ २५॥

देवयानेन मार्गेण गतानामूर्ध्वविष्टपम् ।
खलोकं वा सिद्धिबलात् सुस्थिरा सम्पदिष्यते ॥ २६॥

भवत्यत्रैव सम्पन्नो यदि विद्याबलान्नरः ।
देहं त्यक्त्वा स तु स्थानं तयोरन्यतरद्व्रजेत् ॥ २७॥

देहान्ते सम्पदे प्रोक्ता सहजा स्थितिरात्मनि ।
अत्रैव सम्पदे प्रोक्तं पुरुषस्य विलोकनम् ॥ २८॥

अविलोक्यापि पुरुषं शक्नोति स्थातुमात्मनि ।
प्रथमस्य महाभाग्यं तस्य स्याद्यो विलोकयेत् ॥ २९॥

इतीयं विश्वमीमांसा वासिष्ठेन प्रवर्तिता ।
यद्यत्प्राधान्यतो ज्ञेयं तत्सर्वमिह विद्यते ॥ ३०॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिः विश्वमीमांसा समाप्ता ॥

# विश्वमीमांसा

(२)

## प्रथमोऽध्यायः

### १. अद्वैताधिकरणम्

चिल्लक्षणं सदेवैकं विश्वमेतदुदीरितम् ।
विश्वस्मिन्नितरे भावाः सत एव विभूतयः ॥ १॥

स्वर्णस्य भूषणानीव विभूतिः संविदो जगत् ।
न तत्रारोपितं रूपं रज्जाविव भुजङ्गमः ॥ २॥

सिद्धत्वाच्छास्त्रवत्त्वाच्च दिव्यदृष्टौ च दर्शनात् ।
मुक्तेप्यन्येन दृष्टत्वात्परिणामो न दृग्भ्रमः ॥ ३॥

सर्वेषामपि भावानामभेदस्तात्त्विको भवेत् ।
विविधाकारता तेषां विज्ञेया पारिणामिकी ॥ ४॥

नाणवः प्रकृतिर्वेदं प्राक्सर्गात्सति संस्थितम् ।
अविभिन्नमनाकारमस्मासु स्मृतिबीजवत् ॥ ५॥

ग्रहणे च स्मृतौ प्रज्ञा दृश्यते विषयाकृतिः ।
तादात्म्यं विषयस्यैवं प्रज्ञया सम्प्रदृश्यते ॥ ६॥

न चेत्समष्टिविज्ञानविभूतिर्भूतविस्तरः ।
व्यष्टिविज्ञानतादात्म्यं विषयस्य कथं भवेत् ॥ ७॥

यथा स्वप्ने च मायायां व्यष्टिधीर्विषयाकृतिः ।
तथा समष्टिधीः सर्गे बभूव भुवना कृतिः ॥ ८॥

धीनाशः परिणामेन न यथा स्वप्नमाययोः ।
विप्रलोपः सतः सर्गे न तथा परिणामतः ॥ ९॥

सर्गस्य शास्त्रवत्त्वेन परिणामः क्रमादभूत् ।
यथा जीवस्मृतिस्वप्ने यथेच्छं योगवैभवे ॥ १०॥

अन्तरावर्तकोटीनामेकस्मिन्नुद्गमात्सति ।
एकत्वेऽपि सतोऽभूवन्बोद्धृणां बहु कोटयः ॥ ११॥

आन्तरवस्तुनो ज्ञाता व्यवहारे स शक्तिमान् ।
शाखाः समन्ततो ज्ञानं सा शक्तिः समुदीर्यते ॥ १२॥

विषयग्रहणाभावे चिदेकैव प्रभासते ।
ज्ञातृज्ञानविभागोऽयं विषयग्रहणाश्रयः ॥ १३॥

दिशामिवैकरूपाणां शाखानामन्तरस्य च ।
भेदो नैमित्तिकः सोऽयं नैव वास्तविको भवेत् ॥ १४॥

उपाधिं कञ्चिदाश्रित्य सुसूक्ष्मं सारवत्तरम् ।
बोध एवान्तरो भूत्वा पृथग्व्यक्तित्ववान्भवेत् ॥ १५॥

शक्तिर्मायास्ति नैवेयं भावाभावविलक्षणा ।
शक्तिशक्तिमतोर्भेददर्शनादेव स भ्रमः ॥ १६॥

उपादानमशेषस्य पूर्णमेकमनादि सत् ।
अन्तराः सादयः सर्वे भावाश्चान्ये पृथग्विधाः ॥ १७॥

एवं विषयजालस्य वीक्षितुर्वीक्षितस्य च ।
त्रितयस्यैकवस्तुत्वादद्वैतं पारमार्थिकम् ॥ १८॥

परिणामकृतान्भेदान्पश्यन्भवति चञ्चलः ।
तात्त्विकाभेदसन्दर्शी स्थितप्रज्ञो भवेन्नरः ॥ १९॥

## २. आदिसर्गाधिकरणम्

यथा स्वभावं सर्गादौ संविदो द्यौरजायत ।
अतिसूक्ष्मस्य महसो नाम द्यौरिति वैदिकम् ॥ २०॥

द्योदिवौ परमव्योम परमाकाश एकदिक् ।
महादेशश्चाद्यतपः शब्दा एकार्थवाचिनः ॥ २१॥

इहाखिलानां लोकानामाधारो द्यौरुदीर्यते ।
परस्तात्सर्वदृश्यस्य स्वयं द्यौर्लोकि उच्यते ॥ २२॥

## ३. परमपुरुषाधिकरणम्

ऋतसत्यविभागोऽभूदादिमात्तपसः सतः ।
ऋतं स्यात्प्रापको बोधो बोद्धृसत्यमुदीर्यते ॥ २३ ॥

दिवं परीक्षमाणस्य निष्पन्नो ह्यन्तरः सतः ।
स्वावेशादतिसारो हृद्यस्य दिव्योऽणिमाऽभवत् ॥ २४ ॥

आलोकनं परीक्षी स्यात्पृथग्भावेन तिष्ठतः ।
आवेशस्तेन संश्लेषो नीरस्य पयसा यथा ॥ २५ ॥

तमेवं सति निष्पन्नं भुवनस्यादिमान्तरम् ।
समस्तभुवनातीतं परमं पुरुषं विदुः ॥ २६ ॥

## ४. कालाधिकरणम्

तीव्रं दिवं वीक्ष्यमाणात्परमात्पुरुषाद्धिया ।
अव्यक्तस्वररूपोऽभूत्कालो निस्तुलवैभवः ॥ २७ ॥

## ५. अन्तरिक्षाधिकरणम्

अथ कालकृतात्पाकादुद्गारः कोऽपि धूमवत् ।
गूढानां भूतबीजानां दिवि देशे कृतः सता ॥ २८ ॥

उद्गारः स सतो भूयानन्तरिक्षमभूद्रजः ।
अपामतीव सूक्ष्माणां लोकं तमृषयो विदुः ॥ २९॥

स्थूलास्वप्पदमप्सु स्यात्सूक्ष्मा आपः समीरणः ।
अतीव सूक्ष्मास्ता एव कीर्त्यन्ते गगनाख्यया ॥ ३०॥

चतुर्णामपि भूतानामभावः खमिति भ्रमः ।
अतिसूक्ष्माप्स्वरूपत्वान्नभो भावेषु गण्यते ॥ ३१॥

सतः स्याद्यावती व्याप्तिस्तावती देशकालयोः ।
तावती नभसो व्याप्तिर्यावद्व्यक्तमिदं जगत् ॥ ३२॥

६. त्रिमूर्त्यधिकरणम्

प्रकृतिं त्रिगुणामेके तेजोऽबन्नात्मिकां परे ।
देशकालान्तरिक्षात्मा वासिष्ठस्य मतेन सा ॥ ३३॥

उत्पन्नास्ते सतो भावास्तिस्रः स्युः सूक्ष्ममूर्तयः ।
सर्वं चराचरं व्यक्तं तासामेतज्जगद्वशे ॥ ३४॥

द्यौर्विष्णुर्व्यापकत्वेन भाष्येत योगरूढितः ।
कालो रोदनतो रुद्रो नभो ब्रह्मा बृहत्वतः ॥ ३५॥

नानाविधस्य व्यक्तस्य नभसः स्यात्समुद्भवः ।
देशे स्थितिः कालतोन्तस्तस्मादेषां त्रिकृत्यता ॥ ३६॥

सतस्त्रितयहेतुत्वमेतद्द्वारा चराचरे ।
एतज्जन्मादिहेतुत्वं साक्षादेव समन्वितम् ॥ ३७॥

त्रिकेऽत्र नभसो नाम महाप्राण इतीतरत् ।
महाप्राणस्य वीचिभ्यो नेतरे व्यक्तवायवः ॥ ३८॥

## अथ द्वितीयोऽध्यायः

### १. इन्द्राधिकरणम्

अथान्तरिक्षं सुमहच्चित्ते हृदयमद्भुतम् ।
स्वदिक्कालकृतं दत्त्वा शरीरं समपद्यत ॥ १॥

अविभाज्यतया श्लिष्येत्सूक्ष्मद्रव्यत्रयं हृदि ।
प्रत्येकं व्याप्तिरन्यत्र विशेषोऽयं पुमिच्छया ॥ २॥

परस्य पुंसो हृदयं केवलं दिव्यभागजम् ।
इतरेषां तु सर्वेषां सूक्ष्मद्रव्यत्रयात्मकम् ॥ ३॥

तत्रान्तरविनिष्पत्तेः पुनर्बोधमहार्णवे ।
परमादन्यवद्बोद्धा व्योममूर्तिरजायत ॥ ४॥

आदर्शे रश्मिवद्व्याप्तिर्हृदयेषु भवेत्सतः ।
मृत्पिण्डे रश्मिवद्व्याप्तिस्तस्य व्यक्तेषु वस्तुषु ॥ ५॥

अन्तरिक्षे हृदयवानन्तरिक्षेण कायवान् ।
विश्वस्य चालको बोधो महानिन्द्रः प्रकीर्त्यते ॥ ६॥

विश्वातीतस्य विज्ञानमखण्डानुभवात्मकम् ।
विश्वेन्द्रस्य तु विज्ञानं पूर्णं व्यक्तावगाहि च ॥ ७॥

पूर्वमाहुः परं ब्रह्म कार्यं ब्रह्मोच्यते परः ।
वदन्ति निर्गुणं पूर्वं अपरं सगुणं विदुः ॥ ८॥

आत्मत्वेनानुभाव्यः स्याद्युक्तेन परमः पुमान् ।
तपःस्वाध्याययजनैरिन्द्रस्तु सेव्य उच्यते ॥ ९॥

ईश्वरो नामधेयेन स नव्यानां विपश्चिताम् ।
गगनस्थानवासित्वान्नैरुक्तानां तु मध्यमः ॥ १०॥

वैदिकस्तुतिसम्बन्धाद्यज्ञसम्बन्धतस्तथा ।
धात्वर्थस्य च वैशिष्ट्यादिन्द्रनाम विशिष्यते ॥ ११॥

## २. इन्द्राण्यधिकरणम्

पुंस्येवं द्विविधे जाते शक्तिश्च द्विविधाऽभवत् ।
विश्वातीता पराशक्तिरैन्द्री विश्वस्य चालिका ॥ १२॥

इन्द्रस्य शक्तिं तामेतामिन्द्राणीं परिचक्षते ।
ऋतस्य कर्त्रीं वृत्राणां हन्त्रीं यज्ञस्य साधिकाम् ॥ १३॥

### ३. मातरिश्वाधिकरणम्

महेन्द्रस्येच्छया शक्तिपाके चलति सर्वतः ।
गोलानि समजायन्त वायव्यानि विहायसि ॥ १४ ॥

चलन्देशोऽन्तरिक्षस्य तीव्रशक्तिक्रियाबलात् ।
स्पर्शग्राह्यः परिणतो मातरिश्वाऽभिधीयते ॥ १५ ॥

### ४. विद्युच्छक्त्यधिकरणम्

कालमारुतसङ्घर्षाद् द्योरेवोग्रत्वमाश्रिता ।
विद्युन्नामाभवच्छक्तिर्यया सर्वाद्भुता क्रिया ॥ १६ ॥

### ५. तेजोऽबन्नाधिकरणम्

पचन्त्यां वायुगोलानि माहेन्द्र्यामिच्छया विभोः ।
तेजोऽबन्नान्यजायन्त तान्याश्रित्य यथाक्रमम् ॥ १७ ॥

भावा एते प्रकीर्त्यन्ते मित्रश्च वरुणोऽर्यमा ।
इतरेणार्यमा नाम्ना पूषा मन्त्रेषु गीयते ॥ १८ ॥

प्रकृतिस्त्वदितिर्नाम्ना तस्याः पुत्रा इमे त्रयः ।
इन्द्रश्च तस्यास्तनयस्तत्राभिव्यक्तितः स्मृतः ॥ १९ ॥

६. सूर्याधिकरणम्

तेजोऽबन्नभवो येषु वायुगोलेषु पुष्करे ।
तान्येव सूर्यबिम्बानि प्रज्वलन्तीह तेजसा ॥ २०॥

शक्तिपाकविशेषेण निष्पन्नं निजयेच्छया ।
प्रत्यर्कं हृदयं लब्ध्वा महेन्द्रः प्रतिबिम्बितः ॥ २१॥

ज्वलतां सूर्यबिम्बानां प्रत्यण्डं यद्यपि स्थितिः ।
अस्माकं प्रकृतस्तावदस्य ब्रह्माण्डनायकः ॥ २२॥

यावदेकैकसूर्यस्य देशो भास्यश्चतुर्दिशम् ।
तावदेकैकमण्डं स्यात्तस्य शास्ता तदन्तरः ॥ २३॥

ज्वलन्दशायामेकस्यां यथा दीपो दशान्तरम् ।
पुमान् विशेत्तथा सिद्धो हृदयाद् हृदयान्तरम् ॥ २४॥

अच्छिन्नज्ञानधारातो दूराच्चानुप्रवेशनम् ।
स्पर्शं विनापि नेदिष्ठं सिद्धस्य न विरुध्यते ॥ २५॥

हृदयं यत्र यत्र स्यात्तत्र साधारणं चितः ।
ज्वलनं स्यादिदं तावद्विशिष्टं सिद्धचेष्टितम् ॥ २६॥

तथा प्रविष्टः सादृश्यादुच्यते प्रतिबिम्बितः ।
आवेशे व्यक्तिभेदेऽपि नेच्छाभेदोऽस्ति तादृशे ॥ २७॥

याज्ञिकैः सूर्य एव द्यौस्तेजोभूयिष्ठ उच्यते ।
तच्छरीरमतो देवं नैरुक्ता उत्तमं विदुः ॥ २८॥

सूर्यः शरीरनाम्नैव स देवः सम्प्रगीयते ।
पुंसां व्यक्तशरीराणां स त्विषां राशिरादिमः ॥ २९॥

## ७. उषोदेव्यधिकरणम्

सूर्यमण्डलमाविष्टा माहेन्द्री शक्तिरुत्तमा ।
ब्रह्माण्डनायिका प्राज्ञैरुषोदेवी प्रकीर्त्यते ॥ ३०॥

## ८. अग्न्यधिकरणम्

महेन्द्रस्येच्छया भूयः पाके चलति सर्वतः ।
ग्रहगोलान्यजायन्त भास्वन्तं परितो रविम् ॥ ३१॥

निजेच्छया विनिष्पन्नं शक्तिपाकाद् ग्रहे ग्रहे ।
इन्द्रो हृदयमाविश्य देवोऽग्निः समपद्यत ॥ ३२॥

अमुष्यार्कस्य राज्ये तु पृथिवी कश्चन ग्रहः ।
अस्माकं प्रकृतस्तावदस्मद् भूपालकोऽनलः ॥ ३३॥

## ९. अग्नाय्यधिकरणम्

भूमिमण्डलमाविष्टा शक्तिर्विश्वस्य चालिका ।

अग्नायी कीर्त्यते प्राज्ञैः स्वाहा नामान्तरेण सा ॥ ३४॥

## १०. सोमाधिकरणम्

वर्तमाने पुनः पाके मध्ये भूमिदिनेशयोः ।
महेन्द्रस्येच्छया जज्ञे शीतभानुरुपग्रहः ॥ ३५॥

चन्द्रे च हृदयं लब्ध्वा निष्पन्नं शक्तिपाकतः ।
सोमो नामाभवद्देवो महेन्द्रः प्रतिबिम्बितः ॥ ३६॥

## ११. रात्रिदेव्यधिकरणम्

चन्द्रमण्डलमाविष्टा शक्तिर्विश्वस्य चालिका ।
नेत्रे चान्द्रस्य जगतो रात्रिदेवीति कीर्त्यते ॥ ३७॥

## १२. चतुर्व्यूहाधिकरणम्

भिन्नानपि व्यक्तिभेदादेकेच्छानेकनिर्णयान् ।
इन्द्रस्याहुश्चतुर्व्यूहं खार्कभूचन्द्रविग्रहान् ॥ ३८॥

पुंनाम्ना महतीर्मूर्तीः प्रायः प्राज्ञाः प्रचक्षते ।
केचित्तच्छक्तिनाम्नाहुर्लिङ्गं तत्र न नो यथा ॥ ३९॥

दिक्कालखाभिमानित्वादिन्द्रं विश्वस्य नायकम् ।
तत्समष्ट्यभिधानेन विदः केऽप्यदितिं विदुः ॥ ४०॥

तेजोजलान्नप्राधान्यात्सूर्यचन्द्रवसुन्धराः ।
वदन्ति मित्रं वरुणं पण्डिताः पूषणं च ते ॥ ४१॥

विधयैतच्चतुर्व्यूहनामकल्पनमन्यया ।
आदित्यादिश्रुतौ श्रोतृज्ञापनं तत्प्रयोजनम् ॥ ४२॥

अग्निसूर्यौ यथा पूर्वं चन्द्रमास्तु समीरणः ।
वासो वायव्यदेहानां पितॄणामिति हेतुतः ॥ ४३॥

आत्मत्वात्सर्वजीवानामिन्द्र एव प्रजापतिः ।
विधयैतच्चतुर्व्यूहनामकल्पनमन्यया ॥ ४४॥

व्याहृतीनां प्रयोगाय व्यष्टितश्च समष्टितः ।
वायुजीवस्तुतौ श्रोतृज्ञापनाय च तद्भवेत् ॥ ४५॥

खमूर्तिर्वासुदेवोऽर्कमूर्तिः सङ्कर्षणो मतः ।
प्रद्युम्नः पृथिवीमूर्तिरनिरुद्धोऽब्जविग्रहः ॥ ४६॥

विधयैतच्चतुर्व्यूहनामकल्पनमन्यया ।
सूक्ष्मभात्वेन सर्वस्य ध्येयत्वोक्तिः प्रयोजनम् ॥ ४७॥

शिवो देवमहीपालो मृडः कमलबान्धवः ।
भवः स्वाहा मनोनाथः प्रालेयकिरणो हरः ॥ ४८॥

विधयैतच्चतुर्व्यूहनामकल्पनमन्यया ।
प्रणवत्वेन सर्वस्य ध्येयत्वोक्तिः प्रयोजनम् ॥ ४९॥

## १३. पञ्चमूर्त्यधिकरणम्

इयमेव मही ब्रह्मारजसो बहुलत्वतः ।
बाहुल्येन दिवोंऽशस्य सूर्य एव जनार्दनः ॥ ५०॥

कालभागस्य बाहुल्याच्चन्द्र एव महानटः ।
अपारैश्वर्यशालित्वादिन्द्र एव महेश्वरः ॥ ५१॥

नित्यमङ्गलवत्त्वेन परमात्मा सदाशिवः ।
एताः पञ्च महामूर्तीस्तान्त्रिकाः परिचक्षते ॥ ५२॥

लक्ष्यते मूर्तिशब्देन मूर्तिमानन्तरः प्रभुः ।
मूर्तिमत्त्वं दिवाबोध्यं दिवा हृदयिनः सतः ॥ ५३॥

महासरस्वती पूर्वा महालक्ष्मीरनन्तरा ।
तृतीया तु महाकाली चतुर्थी तु महेश्वरी ॥ ५४॥

पञ्चमी परमा माता विश्वातीता सदाशिवा ।
पञ्चानामपि मूर्तीनां स्त्रीलिङ्गाख्या इमाः स्मृताः ॥ ५५॥

## १४. अष्टमूर्त्यधिकरणम्

सद्यौः कालो नभो वायुस्तेज आपश्च मेदिनी ।
द्रव्याण्यष्टौ स्मृता आर्यैरष्टौ विश्वस्य मूर्तयः ॥ ५६॥

## १५. नासत्याधिकणम्

इन्द्रसूर्यौ विदः केचिदिन्द्राग्नी सूरयोऽपरे ।
सूर्याचन्द्रमसौ प्राज्ञाः परे तु प्राहुरश्विनौ ॥ ५७॥

## १६. पर्जन्याधिकरणम्

मेघं वदन्ति पर्जन्यं व्यक्तित्वं तस्य नो पृथक् ।
इन्द्रस्तस्य स्तुतौ श्रोता तच्छरीरगतो हि सः ॥ ५८॥

## १७. बृहस्पत्यधिकरणम्

बृहस्पतिर्व्यक्तशब्दः सकलो देवताख्यया ।
नामधेयं भवेदन्यत्तस्यैव ब्रह्मणस्पतिः ॥ ५९॥

अव्यक्ततेजोजन्यत्वाच्छब्दस्य सकलस्य च ।
कालप्रकृतिकत्वाच्च सम्बन्धोऽस्ति विहायसा ॥ ६०॥

अतस्तस्य स्तुतौ श्रोता शक्र एव जगत्पतिः ।
महागणपतिं प्राहुरिममेव तु तान्त्रिकाः ॥ ६१॥

## १८. अपांनपादधिकरणम्

मेघादौ दृश्यमानोऽयं वैद्युतोऽग्निरपांनपात् ।
इन्द्र एव स्तुतौ श्रोता विद्युच्छक्तेरमुष्य च ॥ ६२॥

## १९. त्वष्टाधिकरणम्

प्रकृतेः शिल्पशक्तिर्या स त्वष्टा नाम नामतः ।
प्रकृतेरिन्द्रसम्बन्धादिन्द्र एवास्य देवता ॥ ६३॥

## २०. सप्ताश्वाधिकरणम्

ये भास्करस्य सप्ताश्वाः पुराणेषु प्रकीर्तिताः ।
सप्तभ्यः किरणेभ्यस्ते भिद्यन्ते नैव तत्त्वतः ॥ ६४॥

तुरङ्गः सप्तनामैकः शुक्लो रश्मिरुदाहृतः ।
सप्तानामपि रश्मीनां समष्टिर्हि सितो घृणिः ॥ ६५॥

सप्तादित्यास्तु ये गीतास्तेऽमी सप्तमरीचयः ।
मार्तण्डो योऽष्टमो गीतः स शुक्लो रश्मिरुच्यते ॥ ६६॥

## २१. कुमाराधिकरणम्

मात्रा गुहायां निहितः कुमारोऽग्नेर्न भिद्यते ।
मातेयं पृथिवी तत्र तस्य नामेतरद् गुहः ॥ ६७॥

## २२. यमाधिकरणम्

केचिदग्निं यमं प्राहुः केचिदाहुस्त्विषां पतिः ।
परे तु पितृभूपालं धर्मराजं यमं विदुः ॥ ६८॥

तमेतं तान्त्रिकाः केचिद्भैरवं परिचक्षते ।
तेषां भवति भाषायां रात्रिदेवी तु भैरवी ॥ ६९॥

## २३. वाहनाधिकरणम्

सूर्याचन्द्रमसौ नित्यं गतिमत्त्वेन लोकितौ ।
महेन्द्रस्य हरित्वेन कीर्त्येते उपचारतः ॥ ७०॥

असौ हंसः सुपर्णोऽसावसौ हरिरसौ वृषः ।
बहुधा वाहनत्वेन भानुमानुपचर्यते ॥ ७१॥

सूर्यश्चेदेक एवाश्वो दधिक्रावाऽभिधानतः ।
तदा तु परमस्यैव सादित्वमुपचारतः ॥ ७२॥

ब्रह्मविष्ण्विन्द्ररुद्राख्याः परमस्यापि भक्तितः ।
हंसादिवाहनत्वेन तस्मात्तेषां प्रकीर्तनम् ॥ ७३॥

## २४. द्वन्द्वाधिकरणम्

चतुर्णामपि देवानां द्वे द्वे मूर्ती प्रकीर्तिते ।

एका स्यान्महती मूर्तिर्नभोभानुधरेन्दुभिः ॥ ७४॥

अन्या स्यात्पुरुषाकारा लीलार्था मायया धृता ।
धारयन्त्याद्यया विश्वं पालयन्त्यन्यया जगत् ॥ ७५॥

अन्तःकरणिनः सत्त्वादुभयत्रान्तरात्मनः ।
सर्वज्ञस्यातिशक्तस्य व्यक्तित्वमुभयोः समम् ॥ ७६॥

व्यक्तित्वस्य महामूर्तेर्व्यक्तित्वं पुरुषाश्रितम् ।
नित्यं साधकमिच्छायाः पृथङ् नेच्छास्य विद्यते ॥ ७७॥

पुरुषाकृतयस्तेषां चतुर्णां लोकरक्षिणाम् ।
तत्तल्लोकानुसारिण्यो भौतिक्यः सम्प्रकीर्तिताः ॥ ७८॥

इन्द्रादयस्ते चत्वारो लीलार्थं पुरुषोत्तमाः ।
ससृजुर्मायया सिद्धाः स्वानुरूपाः सुयोषितः ॥ ७९॥

ताश्च लोकेश्वरैः सृष्टाश्चतस्रो लोकनायिकाः ।
लोकशक्त्यभिमानिन्यो भवन्ति पुरुषानुगाः ॥ ८०॥

व्यक्तित्वस्य विभेदेऽपि पुरुषस्य नितम्बिनी ।
सततं साधिकेच्छायाः पृथङ् नेच्छावती भवेत् ॥ ८१॥

## अथ तृतीयोऽध्यायः

### १. पञ्चाहुत्यधिकरणम्

पद्मबान्धवपर्जन्यपृथिवीपुरुषाबलाः ।
जन्मप्रसङ्गे पञ्चाग्नीन् होमस्थानान्यपां विदुः ॥ १॥

रसः सोमघृणिर्वृष्टिरन्नं रेतश्च कीर्त्यते ।
होमद्रव्यं त्वेकमेव पञ्चधा परिणामतः ॥ २॥

विभोर्विभूतिभूतानां भावानामत्र होतृता ।
यथा स्वभावं कल्प्या स्यात्तेषामपि च देवता ॥ ३॥

पञ्चम्यामाहुतावापो भजन्ति पुरुषाख्यताम् ।
अनुप्रवेशसिद्धान्ताज्जन्मापत्तिस्तु नात्मनः ॥ ४॥

### २. प्राणाधिकरणम्

इमं प्राणमयं विद्यादाप्यो यः पुरुषः श्रुतः ।
सूक्ष्मः सारो ह्यपां प्राणो देहमध्यगतो नृणाम् ॥ ५॥

अणुरप्येष सकलं शरीरं निजवीचिभिः ।
व्याप्य सर्वाः क्रियाः कुर्वन्नित्यं भवति कर्मवान् ॥ ६॥

नामान्तरेण श्रेष्ठस्य मूलप्राणस्य देहिनाम् ।
प्राणापानौ समानश्च व्यानोदानौ च वीचयः ॥ ७॥

प्राणेनान्नः प्रवेशः स्यान्निश्वासोच्छुसितानि च ।
अपानो गर्भविण्मूत्रशुक्रार्तवविमोचनः ॥ ८॥

समानः पाचकोऽन्नस्य व्यानः कर्माणि कारयेत् ।
साहाय्यकादुदानस्य वैखरी वाक् प्रवर्तते ॥ ९॥

व्यानेन पाणिपादं तु कर्तुं गन्तुं च शक्नुयात् ।
विस्रष्टुं प्रभवेन्नृणां पायूपस्थमपानतः ॥ १०॥

कर्मेन्द्रियाणि नाणूनि पृथक् चत्वारि तानि तत् ।
अन्तर्भवन्ति प्राणे तान्युक्तिर्भाक्ता पृथक्त्वतः ॥ ११॥

गन्धस्पर्शरसज्ञानां प्राणेनैव शरीरिणाम् ।
प्राणोऽत्र किञ्चिन्मनसः साहाय्यकमपेक्षते ॥ १२॥

ज्ञानेन्द्रियाणि नाणूनि त्रीणि तानि पृथक् ततः ।
अन्तर्भवन्ति प्राणे तान्युक्तिर्भाक्ता पृथक्त्वतः ॥ १३॥

मूलप्राणं तमालम्ब्य ज्योतिर्ज्वलति किञ्चन ।
भवन्ति तेन प्राणस्य सुखदुःखादिवेदनाः ॥ १४॥

दुःखस्यान्यस्य वा भोक्ता संसृतेर्भारवाहकः ।
प्राणाश्रयः सप्रकाशः सद्रश्मेर्नातिरिच्यते ॥ १५॥

तदेकमन्तःकरणं चित्तं शास्त्रीयभाषया ।
सद्रश्मिग्राहकं वस्तु यत्प्राणो देहधारिणाम् ॥ १६॥

सोऽन्तरात्मा शरीरस्य शरीरं मनसो महत् ।
कोशः प्राणमयो नाम वेदान्तेषु प्रगीयते ॥ १७॥

वातोऽन्तरिक्षं कालो द्यौरिति वस्तुचतुष्टयम् ।
भवत्यन्योन्यसंश्लिष्टं प्राणे सूक्ष्मतमांशकैः ॥ १८॥

वायवो वीचयस्तस्य पञ्चदेहस्य चालकाः ।
मृत्यवे स्युरनायत्ता अमृतत्वाय साधिताः ॥ १९॥

३. मनोऽधिकरणम्

अन्नसारमयं सूक्ष्मं गुहायां भाति मस्तके ।
आत्मशक्तिस्तदाविश्य मनो भवति नामतः ॥ २०॥

ज्ञेयः पाकविशेषोऽत्र निष्पत्तौ सूक्ष्मचेतसः ।
अन्नस्य यावद्गगनीभावः तीव्रतमः परः ॥ २१॥

अन्तरिक्षमये तस्मिन्नणौ दिक्कालभागयोः ।
अनिवार्या भवेद्व्याप्तिर्मनस्तस्मात्त्रिभागजम् ॥ २२॥

अतिसूक्ष्मरसात्मत्वादन्नसारस्य चेतसः ।
चैतसोऽणुर्निजगुणैर्भवत्यमृतरश्मिवत् ॥ २३॥

प्रभा जलजमित्रस्य यथा प्राप्येन्दुमण्डलम् ।
मनस्तथा सम्प्रपद्य शीता स्यादात्मदीधितिः ॥ २४॥

व्याप्य भासा गुहां सर्वां तथा च प्राणपञ्जरम् ।
प्राणकृत्यानि जानाति स्वकृत्यानि च मानसम् ॥ २५॥

प्राणस्य वेदनाश्चेच्छाश्चेतसि प्रतिबिम्बिताः ।
भवन्ति सुखदुःखादिद्वन्द्वसङ्कल्पहेतवः ॥ २६॥

चक्षुःश्रवणगोलेभ्यः सूक्ष्मच्छिद्रान्तरिक्षतः ।
मनः प्राणस्य साहाय्यात्प्रपश्यति शृणोति च ॥ २७॥

नाणू ज्ञानेन्द्रिये ते द्वे कथनीये पृथक् ततः ।
अन्तर्भूते मनस्येते उक्तिर्भाक्तापृथक्त्वतः ॥ २८॥

तदेकमन्तःकरणं सङ्कल्पानां जनिस्थलम् ।
सद्रश्मिग्राहकं वस्तु यन्मनो देहधारिणाम् ॥ २९॥

सोऽयं मनोमयः कोशो गीयते गुहया सह ।
प्राणस्य स्यादन्तरात्मा विज्ञानस्य कलेबरम् ॥ ३०॥

## ४. वागधिकरणम्

ज्वलंत्सङ्घर्षणात्कालो वागिन्द्रियमणुस्तनौ ।
ऊर्मिः शब्दमयी तस्य वाणी नादवती भवेत् ॥ ३१॥

व्यक्तं तेजश्च सूक्ष्मत्वे प्रणवः स्यान्निसर्गतः ।
व्यक्तत्वे चाक्षरं तेजस्तस्माद्वाक् तैजसी श्रुता ॥ ३२॥

सोपाधिरन्तरिक्षेण सोऽणुर्वागिन्द्रियात्मकः ।
व्यापिन्याः सुतरां सूक्ष्मस्तत्र भागो भवेद्दिवः ॥ ३३॥

परावागिन्द्रियं नाम्ना तद्गुहान्तर्गुहाश्रयम् ।
विज्ञानमयकोशं तं प्रवदन्ति मनीषिणः ॥ ३४॥

सम्प्रविष्टः सतो रश्मिरणुमेतं तु तैजसम् ।
विशुद्धो मनसः साक्षी विज्ञानात्मेति कीर्त्यते ॥ ३५॥

तदेकमन्तःकरणं बुद्धिः शास्त्रीयभाषया ।
सद्रश्मिग्राहकं वस्तु यद्विज्ञांन शरीरिणाम् ॥ ३६॥

मनोमयस्यान्तरात्मा विज्ञानमय उच्यते ।
आनन्दस्य शरीरं तत्प्रवदन्ति मनीषिणः ॥ ३७॥

पश्यन्ती मनसा युक्ता विज्ञानस्य तु दीधितिः ।
उदानप्रेरिता व्यक्ता वैखरी सैव नामतः ॥ ३८॥

शब्द आकाशसञ्चारी बहिरध्यात्ममेव वा ।
वर्णात्मको वेतरो वा वैखरी वागुदीर्यते ॥ ३९॥

५. निगमाधिकरणम्

ब्रह्माण्डे यावदस्तीह हृदि तावच्च विद्यते ।
व्यष्टेरनुभवो यावांस्ततो मनसि नाधिकम् ॥ ४०॥

शुद्धा प्रज्ञामयी वाणी निगमः प्रेरिता हृदा ।
अधीना मनसो वाणी व्यष्टेरनुभवो मितः ॥ ४१॥

मनस्येव स्थितानां वागधीना मनसो भवेत् ।
मनस्त्यक्त्वावतीर्णानां शुद्धप्रज्ञामयी भवेत् ॥ ४२॥

व्यष्टेरेव तु पूर्वस्यां व्युत्पत्तिप्रतिभे उभे ।
व्यष्टेर्व्युत्पत्तिरन्यस्यां समष्टेः प्रतिभा भवेत् ॥ ४३॥

आर्षाः स्युर्निगमाः सर्वे व्युत्पत्तेर्व्यष्टियोगतः ।
शक्तेः समष्टिसम्बन्धवशात्काव्यानि वेधसः ॥ ४४॥

मधुच्छन्दः पुरोगानां कर्तृणामुपलब्धितः ।
अहमर्थान्वयात्तेषु तथैव प्रार्थनान्वयात् ॥ ४५॥

यावदेकर्षिभाषायाः साम्यात्स्वकरणोक्तितः ।
शैली भेदाञ्चदृषो भिन्ने पौनरुक्त्याद्विधान्तरात् ॥ ४६॥

अभेददर्शनेनात्मनाम्ना देवस्य कीर्तनात् ।
मितकालकथायोगात्तन्मात्राचारवर्णनात् ॥ ४७॥

मितकालिकभाषातः शब्दस्य च समुद्भवात् ।
कार्यत्वाद्वाक्यबन्धस्य धियां च व्यक्तियोगतः ॥ ४८॥

छन्दोऽर्थं न्यासवैषम्यान्मन्त्रकृत्पदिलिङ्गतः ।
गुणार्थित्वोच्यमानस्य वेदे नापौरुषेयता ॥ ४९॥

**६. हृदयाधिकरणम्**

हृदानन्दमयं कोशं प्रवदन्ति मनीषिणः ।
तस्य स्थानं तु बोद्धव्यं गुहान्तरगुहान्तरम् ॥ ५०॥

यद्यपि त्रितयं तुल्यं सूक्ष्मद्रव्यत्रयात्मकम् ।
मानसं चापि विज्ञानं हृदयं च शरीरिणाम् ॥ ५१॥

तथापि मानसे द्रव्ये भूयान्भागो विहायसः ।
कालस्य बहुलो बुद्धावधिको हृदये दिवः ॥ ५२॥

शरीरिणां सतो रश्मिरादौ हृदयमाविशेत् ।
ततो बुद्धिमनःप्राणांस्तदद्वारैवाविशेत् क्रमात् ॥ ५३॥

अहङ्कृतिर्वास्तविकीहृदयस्यैव मूलतः ।
अन्तःकरणमेकं तदहङ्काराह्वयं ततः ॥ ५४॥

सद्रश्मिप्रथमावेशात्तन्मूलं स्यादहंङकृतेः ।
अहन्तानुगमोऽन्यत्र रश्मिप्रसरणाद्भवेत् ॥ ५५॥

प्रसारस्योपसंहारान्निद्रायां हृदि केवलम् ।
व्यक्तित्वं तु मनुष्यस्य विश्रान्तिमधिगच्छति ॥ ५६॥

अन्तःकरणबाहुल्येप्येकस्मिन्न रविग्रहे ।
व्यक्तित्वमेकमेव स्यादेककत्वादहङकृतेः ॥ ५७॥

प्राणचेतोगताहन्ता प्रायः संसारिणां भवेत् ।
विश्रान्तिर्हृदि तस्याश्च बलवत्प्रकृतेर्वशात् ॥ ५८॥

प्राणगायां मनोगायां उताहो देहधारिणः ।
देहगेव स्फुरेत्प्रायो मिथ्याज्ञानादहङकृतिः ॥ ५९॥

धीहृद्गतायां मनुजो योगी श्रेष्ठो यथोत्तरम् ।
देहाभिमानलेशोऽपि तदा न स्याच्छरीरिणः ॥ ६०॥

आनन्दमयकोशस्य स्वयमात्मान्तरो भवेत् ।
विज्ञानमयकोशस्तु तस्य श्रेष्ठं कलेबरम् ॥ ६१॥

## ७. अन्तःकरणदेवताधिकरणम्

प्राणमानसविज्ञानहृदयानां यथाक्रमम् ।
वैश्वानरः सुधाभानुर्भास्वानिन्द्रश्च देवताः ॥ ६२॥

# विश्वमीमांसा

(३)

## प्रथमोऽध्यायः

### १. शास्त्रारम्भाधिकरणम्

रमणस्य गुरोः प्राप्य कटाक्षं ज्योतिरद्भुतम् ।
करोमि विश्वमीमांसां वेदमानानुसारतः ॥ १॥

### २. सदधिकरणम्

साङ्ख्यानां जगतो मूलं त्रिगुणा प्रकृतिर्भवेत् ।
मतेन तार्किकाणां तु मूलं स्युः परमाणवः ॥ २॥

वस्तुतो भुवनस्यास्य सदुपादानकारणम् ।
सतो विश्वस्य चाद्वैतं मृत्तिकाघटयोरिव ॥ ३॥

सतो विवर्तो भुवनं सुवर्णस्येव कुण्डलम् ।
दधित्वमिव दुग्धस्य परिणामोऽन्य इष्यते ॥ ४॥

हेतुरूपं पुनः कार्यं विवर्ते स्यान्निमित्ततः ।
परिणामे तथा भावो न कस्माच्चिन्निमित्ततः ॥ ५॥

सत्ताऽनुभूयते लोके या द्रव्यगुणकर्मणाम् ।
कार्येष्वनुगतो धर्मः सा हेतोर्ब्रह्मणः सतः ॥ ६॥

ब्रह्मोच्यते महत्त्वेन सदाभानात्सदुच्यते ।
ज्ञानमेव परं वस्तु सर्वं भादनुभाति तत् ॥ ७॥

गृहीतो विषयो ज्ञानं स्मृतश्च ज्ञानमुच्यते ।
प्रज्ञाविषययोरैक्यं एवं साक्षात्प्रदृश्यते ॥ ८॥

न यदि ज्ञानकार्यं स्याद् दृश्यमानमिदं जगत् ।
ज्ञानेन सह दृश्यस्य तादात्म्यं नोपपद्यते ॥ ९॥

विनाऽन्यस्थूलसामग्रीं सृजति स्वप्नविष्टपम् ।
यथा जीवस्तथा जाग्रज्जगदेतत्ससर्ज सत् ॥ १०॥

व्यवहारे विकाराणामस्तु नाम पदार्थता ।
सत्प्रतिद्वन्द्विवस्तुत्वं पार्थक्येन न सिध्यति ॥ ११॥

## ३. सगुणनिर्गुणब्रह्माधिकरणम्

कार्यानुगा जगत्यत्र परस्तात्केवला चितिः ।
सतः पादः सकार्याचित् त्रिपादी केवलोच्यते ॥ १२॥

समष्ट्या सगुणं ब्रह्म सकार्याचितिरुच्यते ।
परस्तान्निर्गुणं ब्रह्म कीर्त्यते केवला चितिः ॥ १३॥

## ४. शक्त्यधिकरणम्

धर्मत्वादपि धर्मित्वात् बोधो द्वेधा प्रदृश्यते ।
धर्मभूतस्तयोर्बोधः शक्तिरित्यभिधीयते ॥ १४ ॥

सर्वावभासको बोधो धर्मो व्यवहृतौ भवेत् ।
बोधो धर्मो मदीयोऽयं बोध इत्यभिमानवान् ॥ १५ ॥

अन्तरं वस्तुनो ज्ञातृ धर्मिज्ञानं तदुच्यते ।
शाखाः समन्ततो ज्ञानं सधर्मो व्यवहारतः ॥ १६ ॥

धर्मधर्मिविभागोऽयं विज्ञातुरभिमानतः ।
समवायाख्यसम्बन्धान्न द्रव्यगुणयोरिव ॥ १७ ॥

बोधः समुद्रवद्बोद्धृ तत्रावर्तवदन्तरम् ।
तस्माच्छक्तिर्महद्द्रव्यं न गुणो नापि च क्रिया ॥ १८ ॥

ऐश्वर्यं सर्वभूतानामस्तु शक्त्यां प्रतिष्ठितम् ।
सा तु स्वतन्त्रं वस्तु स्यान्न गुणः कस्यचिद्विभोः ॥ १९ ॥

## ५. पुरुषाधिकरणम्

यज्ज्ञानात्यन्तरं वस्तु पुरुषं तं प्रचक्षते ।
अहङ्कारस्य सम्बन्धात्स आत्मा परिकीर्तितः ॥ २० ॥

ज्ञातुर्ज्ञानं स्वरूपं स्यादावर्तस्य जलं यथा ।
ज्ञानरूपतयैवं ज्ञो ज्ञानान्नार्थान्तरं भवेत् ॥ २१॥

विज्ञातृब्रह्मणो रूपमणीयः स्यादणोरपि ।
विज्ञानं ब्रह्मणो रूपं महीयो महतो भवेत् ॥ २२॥

अन्तरस्य च शाखानामैक्यं निर्विषयस्थितौ ।
विषयग्रहणेष्वेव विभागः सम्प्रदृश्यते ॥ २३॥

स्यादेवं विषयापेक्षी शाखानामन्तरस्य च ।
अविभक्तैकरूपाणां विभागो धर्मधर्मिवत् ॥ २४॥

अन्तरावर्तभूयस्त्वादेकस्मिन् बोधसागरे ।
बोद्धारो बहवोऽभूवन् वस्तु नैव तु भिद्यते ॥ २५॥

अन्तरं त्वेकदा सिद्धं तिष्ठेदासृष्टि यद्यपि ।
तस्य भेदेन चेष्टा तु नैव स्याद्विषयेऽसति ॥ २६॥

उपाधिमन्ति सर्वेषामन्तराणि शरीरिणाम् ।
उपाधिसिद्धिसिद्धत्वात्तानि सादीनि तत्त्वतः ॥ २७॥

स्वतः सिद्धं प्राथमिकं निरुपाधिकमन्तरम् ।
परमं पुरुषं प्राहुस्तस्मादाद्यन्तवर्जितम् ॥ २८॥

सर्वेषामपि पूर्वत्वात्स प्राथमिक उच्यते ।
आदिकालेन जननात्पुरुषः परमो विभुः ॥ २९॥

अणीयानणुतोऽपि स्याद्यद्यप्येष परः पुमान् ।
शक्तितः सर्वमाक्रान्तस्तथाऽपि विभुरुच्यते ॥ ३०॥

### ६. निमित्तप्रकृत्यधिकरणम्

इच्छावत्त्वेन जगतो निमित्तं कारणं परः ।
प्रकृतित्वादुपादानं कारणं शक्तिरीर्यते ॥ ३१॥

निमित्तं प्रकृतिश्चास्य सर्वस्य भुवनस्य सत् ।
शक्त्यन्तरस्वरूपाभ्यां अविभक्तमुदीर्यते ॥ ३२॥

### ७. मातापित्रधिकरणम्

माता शक्तिर्यतो गर्भात्सूते सर्वमिदं जगत् ।
इच्छाबीजेन सर्गस्य हेतुत्वात्परमः पिता ॥ ३३॥

तावुक्तौ पितरौ छन्दस्यदितिश्च प्रजापतिः ।
सतीभवौ पाशुपते पाञ्चरात्रे रमाहरी ॥ ३४॥

ब्रह्मणो निर्गुणस्यैव विभागे मिथुनं त्विदम् ।
उत्तरत्र प्रवक्ष्यामः सगुणस्य तु वैभवम् ॥ ३५॥

## अथ द्वितीयोऽध्यायः

### १. द्विविधाकाशाधिकरणम्

आकाशं द्विविधं प्रोक्तं पूर्वं शुद्धमुदीर्यते ।
अन्यद्रजः समाख्यातमाधाराधेयता तयोः ॥ १ ॥

अनुभावयते सर्वं स्वयं चाप्यनुभूयते ।
ज्ञानं दशायामाद्यायां द्वितीयस्यां खमम्बिका ॥ २ ॥

तान्त्रिकाणां तु भाषायां आद्या त्रिपुरसुन्दरी ।
भित्तिर्भुवनचित्रस्य द्वितीया भुवनेश्वरी ॥ ३ ॥

एवं विशुद्धमाकाशं शक्तेर्नैवातिरिच्यते ।
तस्मादाकाशमानन्दं खं च ब्रह्माब्रवीच्छ्रुतिः ॥ ४ ॥

अन्यद्रजो यदाख्यातमाकाशं पूर्वसंश्रितम् ।
स सर्वभूतबीजानां शक्तेरुद्गार इष्यते ॥ ५ ॥

न सर्वभूतबीजानि वस्तूनि स्युः पृथक् पृथक् ।
सति प्रागविभक्तानि बभूवुरिति शुश्रुम ॥ ६ ॥

यथा स्यात्स्मृतिबीजानां प्रज्ञायामविशेषतः ।
तथा स्याद्भूतबीजानामविभक्तस्थितिः सति ॥ ७ ॥

नाणूनि भूतबीजानि प्राक्सर्गात्सति संस्थितौ ।
चितिशक्त्यात्मकान्येव निराकाराणि सर्वथा ॥ ८॥

शुद्धाकाशप्रकृतिकं यदाकाशं रजोमयम् ।
स एव प्रथमः सर्गः परमस्यात्मनो मतः ॥ ९॥

नामधेयमसामान्यं द्यौः शुद्धस्य विहायसः ।
रजोमयस्यान्तरिक्षं नामा सामान्यमिष्यते ॥ १०॥

अन्यानि गगनव्योमपुष्करप्रभृतीनि तु ।
साधारणान्यपि प्रायः प्रयुज्यन्ते द्वितीयखे ॥ ११॥

## २. मातरिश्वाधिकरणम्

अन्तरिक्षे तु विषये विज्ञानं दीप्यदात्मनः ।
एकाग्रत्वात्प्रवृद्धोष्म जज्ञे दृश्येतरन्महः ॥ १२॥

सर्वजीवनहेतुत्वात्तत्तेजः प्राण उच्यते ।
नित्यं शब्दायमानत्वाद्‌भण्यते प्रणवः स्वरः ॥ १३॥

एतत्कर्मार इव समधमद्ब्रह्मणस्पतिः ।
इति यद्‌भाषितं मन्त्रे स्वरस्य धमनं तु तत् ॥ १४॥

व्यापकोऽयं महान्प्राणो मातरिश्वाऽभिधीयते ।
धमनापरपर्यायात् श्वसनाद् व्योममातरि ॥ १५॥

प्राणजृम्भणदेशत्वाद् व्योम्नस्तन्मातृतोच्यते ।
भाक्तो भाषा चमत्कारो विज्ञेयः स तु केवलम् ॥ १६॥

श्वसनान्मातरिश्वेव स रुद्रो रोदितीत्यतः ।
सूक्ष्मविद्युत्स्वरूपत्वाद् एषोऽग्निः मध्यमः स्मृतः ॥ १७॥

प्रणवश्च महान्प्राणः सूक्ष्मा विद्युदिति त्रिकम् ।
एकः पदार्थस्त्रिगुणो न पदार्थत्रयं भवेत् ॥ १८॥

देवस्य मध्यमस्यास्य रुद्रवातेन्द्रनामभिः ।
आख्यानं गुणभेदेन नैव रूपस्य भेदतः ॥ १९॥

शाक्तानां प्रणवस्तारा महान्प्राणस्तु भैरवी ।
विद्युत्प्रचण्डचण्डी स्यादभेदः प्राग् वदिष्यते ॥ २०॥

स्वरशक्तिः प्राणशक्तिर्विद्युच्छक्तिरिति त्रिधा ।
चिच्छक्तिरेका कार्याणां भेदतः समपद्यत ॥ २१॥

मन्त्रवर्णमयः शब्दो यद्यपि ब्रह्मणस्पतिः ।
तथापि तत्पदं भक्त्या प्रकृतौ सर्गवर्णने ॥ २२॥

## ३. वर्णात्मकशब्दाधिकरणम्

प्रणवात्स्वरतो भिन्नो व्यक्तो वर्णमयो ध्वनिः ।
परस्य शक्तिः पूर्वः स्याद्व्यक्तसङ्घर्षजः परः ॥ २३॥

एवं भेदेऽप्यभेदोऽस्ति शब्दयोरुभयोस्तयोः ।
पूर्वः समुद्रवद् बोध्यः परो बोध्यस्तरङ्गवत् ॥ २४॥

ब्रह्मणस्पतिरेष स्यान्नाम्नाऽन्येन बृहस्पतिः ।
तान्त्रिकाणां तु भाषायामयमेव विनायकः ॥ २५॥

इयं मतेन शाक्तानां मातङ्गी नाम देवता ।
व्यवहारो रुचेर्भेदाल्लिङ्गभेदेन वस्तुषु ॥ २६॥

चलनक्रियायोगाच्च तथा नादगुणेन च ।
प्रणवप्रकृतित्वाच्च गुप्तं यन्त्रे च वा सतः ॥ २७॥

ब्रह्मणो घोरतपसां ज्वलनादस्त्ररूपतः ।
द्रव्यं किमपि शब्दः स्याद्गुणो नैव विहायसः ॥ २८॥

४. व्यक्तसर्गाधिकरणम्

अखण्डस्वररूपस्य प्राणस्य धमनादिदम् ।
अम्बरादखिलं व्यक्तमसतः सदजायत ॥ २९॥

सर्वकारणभावत्वाद्यथा ब्रह्म सदीरितम् ।
विकारभूतभावत्वात्तथा व्यक्तं सदुच्यते ॥ ३०॥

अव्यक्तत्वेन विश्वस्मादात्मनश्च जडत्वतः ।
विभक्तमिव मध्यस्थं दृष्ट्यामसदिवाम्बरम् ॥ ३१॥

आवर्तभास्तत्र तत्र मध्ये गगनवारिधेः ।
जज्ञिरे वायवो व्यक्ताः शक्तेः केनापि कर्मणा ॥ ३२॥

प्राणस्य व्यक्तवायूनां भेदोऽभेदश्च शब्दवत् ।
पूर्वः समुद्रवद् बोध्यः परो बोध्यस्तरङ्गवत् ॥ ३३॥

आश्रित्य पवनावर्तान् व्यक्तीभूता महोंऽशवः ।
व्यक्तानि समपद्यन्त तेजांसि गगनस्थले ॥ ३४॥

प्रत्यण्डं रवि बिम्बानि यानि भान्ति विहायसि ।
तान्येव व्यक्ततेजांसि सिद्ध्यन्ति गगनस्थले ॥ ३५॥

पवनोपाधिकं ज्योतिः एवं सूर्यस्य मण्डलम् ।
अपक्षपुच्छमादित्यं वायुमाह ततः श्रुतिः ॥ ३६॥

ज्वलद्भ्यः सूर्यरश्मिभ्यः समजायन्त सिन्धवः ।
ऊष्मणः स्वेदवत्तेषां उत्पत्तिरुपपद्यते ॥ ३७॥

समुद्रानेव जातानां पूर्वरूपाण्यपां विदुः ।
रवेः कुटुम्बे गोलानामेते स्युर्मूलहेतवः ॥ ३८॥

अप्सु सम्पच्यमानासु ज्वलद्भिः सूर्यरश्मिभिः ।
तन्मध्ये समपद्यन्त पृथिव्यः परितो रविम् ॥ ३९॥

## ५. पञ्चभूताधिकरणम्

अन्तरिक्षं व्यक्तवायुं व्यक्तं तेजो जलं भुवम् ।
सूरयः पञ्चभूतानि शास्त्रेषु परिचक्षते ॥ ४० ॥

अमिश्रं किञ्चिदप्येषु न भूतमुपलभ्यते ।
बाहुल्यादेव तद्वादः पार्थक्यादुपपद्यते ॥ ४१ ॥

शुद्धाकाशं महान्तं च प्राणं यद्भूतपञ्चके ।
विद्वांसो गणयन्त्येके तत्तु प्रामादिकं मतम् ॥ ४२ ॥

## ६. भूतत्रयाधिकरणम्

समीरणेऽन्तरिक्षे च भूतानां त्रिकमुत्तरम् ।
सूक्ष्मरूपतया भाति सूर्यादौ स्थूलरूपतः ॥ ४३ ॥

तस्मात् त्रीण्येव भूतानि न पञ्चेत्यपरे विदुः ।
तनुं पञ्चीकृतां पूर्वे विदुरन्ये त्रिवृत्कृताम् ॥ ४४ ॥

आप एव बहुत्वेन व्यक्तवातान्तरिक्षयोः ।
अप एवादिमां सृष्टिमत आहुर्विपश्चितः ॥ ४५ ॥

अत एवाम्मयः प्राणो वायव्यश्चोच्यते श्रुतौ ।
अप्समुद्रादिभिः शब्दैरन्तरिक्षं च कीर्त्यते ॥ ४६ ॥

## ७. मूलप्रकृत्यधिकरणम्

रक्तशुक्लासिता योक्ता प्रकृतिः शिरसि श्रुतेः ।
साङ्ख्यानां त्रिगुणाऽस्माकं तेजोऽबन्नात्मिका तु सा ॥ ४७॥

जडप्रकृतिरव्यक्ता त्वन्तरिक्षात्मिका भवेत् ।
किञ्चिद्व्यक्तानिलमयी व्यक्ता दृश्यमिदं जगत् ॥ ४८॥

## ८. ब्रह्माण्डाधिकरणम्

साङ्गेन स्वकुटुम्बेन सहैकैको दिवाकरः ।
एकैकं नभसो देशे ब्रह्माण्डमभिधीयते ॥ ४९॥

कुटुम्बभूतान्सूर्यस्य ग्रहानेव भुवो विदुः ।
इयं च पृथिवी योनिरस्माकं कश्चन ग्रहः ॥ ५०॥

प्रत्यण्डमपि भासन्ते यथा भुवनबान्धवाः ।
तन्निघ्नास्तान् परीवृत्य भासन्ते भूमयस्तथा ॥ ५१॥

एतं चन्द्रमसं प्राहुः भूम्यायत्तमुपग्रहम् ।
चन्द्राः परोक्षा अन्येऽपि ग्रहनिघ्ना उपग्रहाः ॥ ५२॥

पाकाद्रविभुवोर्मध्ये जन्म चन्द्रस्य सिध्यति ।
देवाः सूर्ये भुवि नराश्चन्द्रे तु पितरः प्रजाः ॥ ५३॥

